# BHOJAPRABANDHA

OR

ANECDOTES OF BHOJA RAJAH AND THE POETS OF HIS COURT.

BY

BALLALA.

# भोजप्रबन्धः ।

श्रीबल्लालविरचितः ।



CALCUTTA:
PRINTED & PUBLISHED BY
BABU BHUVANA CHANDRA VASAKA.
At the Sanbáda Jnánaratnákara Press.
No. 8 Nimtollah Ghat Street.
1873.

श्रीगणेशाय नमः।

# भोजप्रबन्धः॥

---

आदौ धाराराज्ये सिन्धुलसंज्ञो राजा चिरं प्रजाः पर्य्यपालयत्, तस्य वृद्धत्वे भोज इति पुत्रः [illegible]। स यदा पञ्चवार्षिकः तदा पिता ह्यात्मनो जरां ज्ञात्वा मुख्यामात्यानाहूय अनुजं मुञ्जं महाबलमालोक्य, पुत्रञ्च बालं वीक्ष्य विचारयामास। यदाहं राजलक्ष्मीभारधारणसमर्थं सोदरमपहाय राज्यं पुत्राय प्रयच्छामि, तदा लोकापवादः। अथवा बालं मे पुत्रं मुञ्जो राज्यलोभाद्विषादिना मारयिष्यति, तदा दत्तमपि राज्यं वृथा, पुत्रहानिर्वंशोच्छेदश्च।

लोभप्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च।
द्वेषक्रोधादिजनको, लोभः पापस्य कारणम्॥
लोभात् क्रोधः प्रभवति, क्रोधाद्द्रोहः प्रवर्त्तते।

द्रोहेण नरकं याति, शास्त्रज्ञोऽपि विचक्षणः ॥
मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् ।
लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥

इति विचार्य्य राज्यं मुञ्जाय दत्त्वा तदुत्सङ्गे भोजमात्मजं मुमोच । ततः क्रमाद्राजनि दिवङ्गते सम्प्राप्तराज्यसम्पत्तिर्मुञ्जो मुख्यामात्यं बुद्धिसागरनामानं व्यापारमुद्रया दूरीकृत्य, तत्पदे अन्यं विदधे ततो गुरुभ्यः क्षितिपालपुत्रं वाचयति, ततः क्रमेण सभायां ज्योतिःशास्त्रपारङ्गतः सकलविद्याचातुर्य्यवान् ब्राह्मणः समागमत् राज्ञे स्वस्तीत्युक्त्वा उपविष्टः । स चाह, देव ! लोकोऽयं मां सर्व्वज्ञं वक्ति तत् किमपि पृच्छ ।

कण्ठस्था या भवेद्विद्या साप्रकाश्या सदा बुधैः ।
या गुरौ पुस्तके विद्या, तया मूढः प्रतार्य्यते ॥

इति राजानं प्राह । ततो राजापि विप्रस्याहंकारमुद्रया च सत्कृतां तद्वार्त्तां श्रुत्वा अस्माकं जन्मारभ्यैतत्क्षणपर्य्यन्तं यद्यन्मयाचरितं यद्यत्कृतं तत्सर्व्वं वदसि यदि, भवान् सर्व्वज्ञ एवेत्युवाच । ततो ब्राह्मणोऽपि राज्ञा यद्यत्कृतं तत्सर्व्वमुवाच गूढव्यापारमपि, ततो राजापि सर्वाण्यभिज्ञानानि

ज्ञात्वा तुतोष। पुनश्च पञ्चषट्पदानि गत्वा पादयोः पतित्वा, इन्द्रनीलपुष्परागमरकतवैदूर्य्यखचितसिंहासने उपविश्य, राजा प्राह।

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम्।
कीर्त्तिञ्च दिक्षु विमलां वितनोति लक्ष्मीम्
किं किन्न साधयति कल्पलतेव विद्या॥

ततो विप्रवराय दशाश्चानाजानेयान् ददौ, ततः सभायामासीनो बुद्धिसागरः प्राह राजानं, देव! भोजस्य जन्मपत्रिकां ब्राह्मणं पृच्छेति ततो मुञ्जः प्राह भोजस्य जन्मपत्रिकां विधेहीति ततोऽसौ ब्राह्मण उवाच अध्ययनशालायां भोज आनेतव्य इति मुञ्जोऽपि ततः कौतुकादध्ययनशालामलङ्कुर्वाणं भोजं भटैरानाययामास। ततः साक्षात्पितरमिव राजानम् आनम्य सविनयं तस्थौ। ततस्तद्रूपलावण्यमोहिते राजकुमारमण्डले प्रभूतसौभाग्यं महीमण्डलमागतं महेन्द्रमिव साकारं मन्मथमिव मूर्त्तिमत् सौभाग्यमिव भोजं निरूप्य राजानं प्राह दैवज्ञः राजन्! भोजस्य भाग्योदयं वक्तुं विरञ्चिरपि नालम्, कोऽहमुदरम्भरिः ब्राह्मणः? किं तथा-

पि वदामि स्वमत्यनुसारेण। भोजमितोऽध्ययन शालायां प्रेषय ततो राजाज्ञया भोजेऽध्ययन-शालाङ्गते विप्र प्राह।

पञ्चाशत् पञ्चवर्षाणि सप्तमासदिनत्रयम्।
भोजराजेन भोक्तव्यः सगौड़ो दक्षिणापथः॥

इति तत्तदाकर्ण्य राजा चतुर्थ्यादपहृतसान्त्व सुमुखोऽपि विच्छायवदनोऽभूत्. ततो राजा ब्राह्मणं प्रेषयित्वा निशीथे शयनमासाद्य एकाकी सन् व्यचिन्तयत्, यदि राज्यलक्ष्मीर्भोजकुमारं गमिष्यति, तदाहं जीवन्नपि मृतः।

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः क्षणेन
सोऽप्यन्य एव भवतीति विचित्रमेतत्॥

किञ्च। शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः।
बुद्धिप्रारब्धकार्यस्य नास्ति किञ्चन दुष्करम्॥
यस्तूयया हतेनैव पूर्वोपायोद्यमैरपि।
कर्तॄणां दृश्यते सम्पत्सुहृद्भिर्मन्त्रिभिस्तथा॥

ततोऽस्मै किं दुःसाध्यम्।

अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे।

परीवादभीरूणां दूरतो यान्ति सम्पदः ॥

किञ्च। आदानस्य प्रदानस्य कर्त्तव्यस्य च कर्म्मणः।

क्षिप्रमक्रियमाणस्य कालः पिबति सम्पदः ॥

अवमानं पुरस्कृत्वा मानं कृत्वा च पृष्ठतः।

स्वार्थं समुद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः।

एतदेवातिपाण्डित्यं यत् स्वल्पात् भूरिनाशनम् ॥

जातमात्रं न यः शत्रुं व्याधिं वा प्रशमं नयेत्।

अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते

अक्षा/शुष्कशरीरस्य किं करिष्यन्ति संहता। ।

स्वस्तान्यस्त.तपतस्य वारिधारा इवारयः ॥

अफलानि दुरन्तानि समव्ययफलानि च।

अशक्यानि च वस्तूनि नारभेत विचक्षणः ॥

ततश्चैवं विचिन्तयन्नभुक्त एव दिनस्य तृतीये यामे एक एव मन्त्रयित्वा वङ्गदेशाधीश्वरस्य महाबलस्य वत्सराजस्य आकारणाय समङ्गरक्षकं प्राहिणोत्, स चाङ्गरक्षको वत्सराजमुपेत्य प्राह, राजा त्वामाकारयतीति। ततः स रथमारुह्य परिवारेण परिवृतः समागतो रथादवतीर्य राजानम-

वलोक्य प्रणिपत्योपविष्टः राजा च बौधं निर्ज्जनं विधाय वत्सराजं प्राह,

राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति ।
ते तु सम्मानितास्तस्य प्राणैरप्युपकुर्वते ॥

ततस्त्वया भोजो भुवनेश्वरीविपिने हन्तव्यः प्रथमयामे निशायाः शिरश्चान्ते पुरमानेतव्यमिति । स चोत्थाय नृपं नत्वाह, देवादेशः प्रमाणं, तथापि भवल्लालनात्किमपि वक्तुकामोऽस्मि ततः सापराध मिति मे वचः क्षन्तव्यम् ।

भोजे द्रव्यं न सेना वा परिवारो बलान्वितः।
परस्मीत इवास्तेऽद्य स हन्तव्यः कथं प्रभो ?
पारम्पर्य्यं इवासक्तस्त्वत्पादउदरम्भरिः
तद्वधे कारणं नैव पश्यामि नृपपुङ्गव !

ततो राजा सर्वं प्रातः सभायां प्रवृत्तं वृत्तमकथयत् स च श्रुत्वा हसन्नाह ।

त्रैलोक्यनाथो रामोऽस्ति वसिष्ठो ब्रह्मपुत्रकः ।
तेन राज्याभिषेके तु मुहूर्त्तः कथितो भवत् ॥
तन्मुहूर्त्तेन रामोऽपि वनं नीतोऽवनीं विना ।
सीतापहारोऽप्यभवद्वैरिञ्चिवचनं वृथा ॥
भ्रातः कोऽयं नृपश्रेष्ठ किञ्चिन्नृप उदरम्भरिः ।

यदुक्त्या मन्मथाकारं कुमारं हन्तुमिच्छसि॥

किञ्च। किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः।
इति सञ्चिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा॥
उचितमनुचितं वा कुर्वता कार्य्यजातं
परिणतिरवधार्य्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्म्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः॥

किञ्च।

येन सहासितमशितं हसितं कथितञ्च रहसि विस्रब्धम्।
तं प्रति कथमसतामपि निवर्त्तते चित्तमामरणात्॥

किञ्च। अस्मिन् हते त्वद्राज्ञः सिन्धुलस्य परमप्रीतिपात्राणि महावीरास्त्वेवानुगते स्थिताः ते त्वन्नगरमुल्लोलकल्लोलाः पयोधरा इव प्लावयिष्यन्ति चिराद्दृढमूलेऽपि त्वयि प्रायः पौराः भोज भुवोभर्त्तारं भावयन्ति। किञ्च।

बह्वपि च सुकृतकर्म्माणि दुर्नीती चेत् श्रियं हरत्येव।
तैलैस्सदोपयुक्तां दीपशिखां विदलयति हि वातालिः॥

देव! पुत्रवधः क्वापि न हिताय। इत्युक्तं वत्सराजवचनमाकर्ण्य राजा कुपितः प्राह। त्वमेव राज्याधिपतिः न तु सेवकः।

स्वामुष्मिके यो न यतते स भ्रष्टो भवपाशकैः
तज्जीवनमपि व्यर्थं अजागलकुचाविव ॥

इति । ततो वत्सराजः कालोचितमालोचनीयमिति मत्वा तूष्णीं बभूव । अथ लम्बमाने दिवाकरे मुञ्जः सौधोत्सङ्गादवतरन्तं कुपितमिव कृतान्तं वत्सराजं वीक्ष्य सभ्या अपि विविधेन मिषेण स्वभवनानि प्रापुर्भीताः सभासदः । ततः स्वमेव कामं स्वागारपरित्राणार्थं प्रेषयित्वा रथं भुवनेश्वरीभवनाभिमुखं विधाय भोजकुमारोपाध्यायाकारणाय प्राहिणोदेकं वत्सराजः । स चाह पण्डितं तात ! त्वामाकारयति वत्सराजः इति । सोऽपि तदाकर्ण्य वज्राहत इव भूताविष्ट इव ग्रहग्रस्त इव तेन सेवकेन करेण धृत्वानीतः पण्डितः । ततो बुद्धिमान् वत्सराजः सप्रणाममित्याह, पण्डित ! तात ! उपविश, राजकुमारं जयन्तं अध्ययनशालाया आनयेति । आयान्तं जयन्तं कुमारं किमप्यभीतं दृष्ट्वानैषीत् पुनः प्राह पण्डितं विप्र ! भोजकुमारमानयेति ततो विदितवृत्तान्तो भोजः कुपितो ज्वलन्निव शोणितेक्षणः समेत्य प्राह, आः पाप ! राज्ञो मुख्यकुमारम् एकाकिनं मां राजभवनात् बहि-

राजेन्द्र तव का नाम शक्तिरिति वामचरणपादुका मादाय भोजेन तालुदेशे हतो वत्सराजः। ततो वत्सराजः प्राह, भोज! वयं राजादेशकारिण इति बालं रथे निवेश्य, खड्गमपकोशं कृत्वा जगाम्याशु महामायाभवनं, ततो गृहीते भोजे लोकाः कोलाहलं चक्रुः ऊं भावस्य प्रवृत्तः, किं किमिति ब्रुवाणा भटा विक्रोशन्त आगत्य सहसा भोजवधाय नीतं ज्ञात्वा हस्तिशालामुष्ट्रशालां वाजिशालां रथशालां प्रविश्य सर्वान् ज : ततः प्रतोलीषु राजभवनप्राकारवेदिकासु बहिर्द्वारविटङ्केषु पुरसमीपेषु भेरिपटहमुरजमड्डकडिण्डिमनिनदाडम्बरेणाम्बरं विडम्बितमभूत् केचिद्भिमलासिना केचिद्विवेग केचित् कुन्तेन केचित् पाशेन केचिद्धङ्किना केचित्परशुना केचिच्छक्त्येन केचित्तोमरेण केचित्प्रासेन केचिदश्मना केचिद्धारायां ब्राह्मणयोषितो राजपुत्रराजसेवकाराजानः पौराश्च प्राणपरित्यागं दधुः ततः सावित्री संज्ञा भोजस्य जननी विश्वजननीव स्थिता दासीमुखात् स्वपुत्रस्थितिमाकर्ण्य कारायां नेत्रेऽपिधाय वदती प्राह, पुत्र! पितृव्येन कान्दशां गमितोऽसि? ये मया नवमी उपवासाः

स्वकृते कृताः तेऽद्य मे विफला जाताः, दशापि दिशा मुखानि शून्यानि पुत्र! देवेन सर्वज्ञेन सर्वशक्तिमाकृष्टाः श्रियः पुत्र! एनन्दासीवर्गं सहसा विच्छिन्नशिरसम्पश्येत्युक्त्वा भूमावपतत्। ततः प्रदीप्ते वैश्वानरे समङ्गतधमस्तोमेनैव मलीमसे नभसि पापभारादिव पश्चिमपयोनिधौ लग्ने मार्तण्ड मण्डले महामायाभवनमासाद्य प्राह भोजं वत्सराज कुमार भृत्यानां दैवतं ज्योतिःशास्त्रविशारदेन केनचिद्ब्राह्मणेन तव राज्यप्राप्तावुदीरितायां राज्ञा भवद्वधो व्यादिष्ट इति॥ भोजः प्राह।

रामे प्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनम्
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम्।
कारागारनिषेवणञ्च मरणं संचिन्त्य लङ्केश्वरे
सर्वः कालवशेन नश्यति नरः कोऽवा परित्रायते॥
लक्ष्मी कौस्तुभपारिजातसहजमृत्सुनुस्सुधाम्भोनिधे-
र्दैवेन प्रणयप्रसादविधिना मूर्ध्नी धृतः शम्भुना।
अद्याप्युक्षति नैव दैवविहितं क्षैण्यं क्षपावल्लभः
केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखा सखी
विकटोर्व्यामप्यटनं शैलशिलारोहणमपांनिधेस्तरणम्
निगडं गुहाप्रवेशो विधिपरिपाकः कथन सन्तार्य्यः॥

अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् ।
वह्निः शीतलतां हिमन्दहनतामायाति यस्येच्छया
लीलादुर्ललिताद्भुतव्यसनिने देवाय तस्मै नमः ॥

ततो वटवृक्षस्य पत्रमादाय एकेन पुटोकृत्य जङ्घांच्छुरिकया छित्वा तत्र पुटके रक्तमारोप्य तृणेन कस्मिन् पत्रे कञ्चन श्लोकं लिखित्वा वत्सं प्राह महाभाग! एतत्पत्रं नृपाय दातव्यं त्वमधिराजाज्ञां विधेहीति ततो वत्सराजस्यानुजोभ्राता भोजस्य प्राणपरित्यागसमये दीप्यमानसुखश्रियमवलोक्य प्राह,

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समन्नाशं सर्वमन्यत्तु गच्छति ॥
न ततो हि सहायार्थं माता भार्य्या च तिष्ठति
न मित्रपुत्रौ न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥
बलवानप्यशक्तोऽसौ धनवानपि निर्धनः ।
श्रुतवानपि मूर्खश्च यो धर्मविमुखो जनः ॥
इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
मत्वा निरौषधस्थानं स रोगी किं करिष्यति ॥
जरां मृत्युं भयं व्याधिं यो जानाति स पण्डितः ।

स्वस्थस्तिष्ठेन्निषीदेद्वा स्वपेद्वा केनचिद्धसेत् ॥
तुल्यजातिवयोरूपान् हतान् पश्यन्ति मृत्युना ।
न हि तत्रास्ति ते त्रासः वज्रवत् हृदयन्तव ॥

इति । ततो वैराग्यमापन्नो वत्सराजः भोजं क्षमस्वेत्युक्त्वा प्रणम्य तस्य रथे निवेश्य नगराद्बहिर्वने तमसि गृहमागम्य भूमिगृहान्तरे निक्षिप्य भोजं ररक्ष । स्वयमेव कृत्रिमविद्याविद्भिः सुकुण्डलं स्फुरद्वक्त्रं निमीलितनेत्रं भोजकुमारमस्तकं कारयित्वा तच्चादाय कनिष्ठो राजभवनं गत्वा राजानं नत्वा प्राह:, श्रीमता यदादिष्टं तत्साधितमिति । ततो राजा च पुत्रवध ज्ञात्वा तमाह. वत्सराज । खड्गप्रहारसमये तेन पुत्रेण किमुक्तमिति ? वत्सराजस्तत्पत्रमदात् । राजा स्वभार्य्याकरेण दीपमानीय तानिपत्राक्षराणि वाचयति ।

मान्धाता च महीपतिः कृतयुगालङ्कारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः ?
अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते !
नैकेनापि समं गता वसुमती नूनं त्वया यास्यति ॥

राजा च तदर्थं ज्ञात्वा शय्यातो भूमौ पपात, ततश्च देवी करकमलचालितचेलाञ्चलानिलेन ससंज्ञो

भूत्वा, देवि ! मां मा स्पृश हा हा पुत्रघातिनमिति विलपन् कुरर इव, द्वारपालानानाय्य ब्राह्मणाना-यतेत्याह, ततः स्वाज्ञया समागतान् ब्राह्मणान्नत्वा मया पुत्रो हतः तस्य प्रायश्चित्तं वदध्वमिति वदन्तं ते तमूचुः राजन् ! सहसा वह्निमाविशेति ततः समेत्य बुद्धिसागरः प्राह, यथा त्वं राजाधमस्तथैव अमात्याधमो वत्सराजः, तत्र किल राज्यं दत्वा सिन्धुलन्टपेण तेन त्वदुत्सङ्गे भोजः स्थापितः तच्च त्वया पितृव्येणान्यत्कृतम् ।

कतिपयदिवसस्थायिनि मदकारिणि यौवने दुरात्मानः ।
विदधति तथापराधं जन्मैव यथास्य वृथा भवति ॥

सन्तस्तृणोत्सारणमुत्तमाङ्गात्
सुवर्णकोट्यर्पणमामनन्ति ।
प्राणव्यये वापि कृतोपकाराः
खलाः परे वैरमिवोद्वहन्ति ॥

उपकारश्चापकारो यस्य व्रजति विस्मृतिम् ।
पाषाणहृदयस्यास्य जीवतीत्यभिधा मुधा ॥

यथाङ्कुरः सुसूक्ष्मोऽपि प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तथा लोकः सुरक्षितः ॥

हिरन्यधान्यरत्नानि धनानि विविधानि च ।

तथान्यदपि यत्किञ्चित्प्रजाभ्यः स्पृहीभ्यताम् ॥
राज्ञि धर्म्मिणि धर्म्मिष्ठाः पापे पापपराः सदा ।
राजानमनुवर्त्तन्ते यथा राजा तथा प्रजाः ॥

ततो रात्रावेव वह्निप्रवेशनं निश्चिते राज्ञि सर्वे सामन्ताः पौराश्च मिलिताः पुत्रं हत्वा पापभयात् भीतो नृपतिर्वह्निं प्रविशतीति किंवदन्ती सर्वत्राजनि । ततः बुद्धिसागरः द्वारपालमाहूय न केनापि भूपालभवनं प्रवेष्टव्यमित्युक्त्वा नृपमन्तःपुरे निवेश्य सभायामेकाकी सन् उपविष्टः, ततो राजमरणवार्त्तां श्रुत्वा वत्सराजो गृहमागत्य बुद्धिसागरं नत्वा शनैः प्राह, तात ! मया भोजराजो रक्षितः इति । बुद्धिसागरस्य कर्णे तस्य किमप्यकथयत्, तदुक्त्वा वत्सराजश्च निष्क्रान्तः । ततः मुहूर्त्तेन कोऽपि करकलितदन्तीन्द्रदन्तदण्डो विरचितप्रत्यग्रजटाकलापःकर्पूरकरम्बितभसितानुद्धर्त्तितसकलतनुर्मूर्त्तिमान्मन्मथ इव स्फटिककुण्डलमण्डितकर्णयुगलः कौशेयकौपीनो मूर्त्तिमांश्चन्द्रचूड़ इव सभां कापालिकः समागतः तं वीक्ष्य बुद्धिसागरः प्राह योगीन्द्र ! कुत आगम्यते, कुत्र ते निवेशश्च ? कापालिके त्वयि यन्मत-

कारकारो कलाविशेष औषधविशेषोऽप्यस्ति ? योगी प्राह,

देशे देशे भवनं भवने तथैव भिक्षान्नम् ।
सरसि च नद्यां सलिलं शिवशिव तत्वार्थियोगिनां पुंसाम् ॥
ग्रामे ग्रामे कुटी रम्या निर्झरे निर्झरे जलम् ।
भिक्षायां सुलभं चान्नं विभवैः किं प्रयोजनम् ?

देव ! अस्माकं नैको देशः सकलभूमण्डलं भ्रमामः गुरूपदेशे तिष्ठामः, निखिलं भुवनतलं करतलामलकवत्पश्यामः सर्पदष्टं विषव्याकुलं रोगग्रस्तं शस्त्रभिन्नशिरस्काङ्कालशिथिलितं तात ! तत्क्षणादेव विगतसकलव्याधिसङ्घयं कुर्म्म इति राजापि कुड्यान्तर्हित एव श्रुत सकलवृत्तान्तः सभामागतः कापालिकं दण्डवत्प्रणम्य योगिन्द्र ! रुद्रकल्प । परोपकारपरायण ! महापापिना मया हतस्य पुत्रस्य प्राणदानेन मां रक्षेत्याह । अथ कपालिकोऽपि राजन् ! माभैषोः पुत्रस्ते न मरिष्यति, शिव प्रसादेन त्वहसेष्यति । परं श्मशानभूमौ बुद्धिसागरेण सह होमद्रव्याणि प्रेषयेत्यवोचत्, ततो राज्ञा कापालिकेन यदुक्तं तत्सर्वं तथाकुर्विति बुद्धिसागरः प्रेषितः, ततो रात्रौ गूढरूपेण भोजोऽपि तत्र नदी-

पुलीने नीतः योगिना भोजो जीवित इति प्रथा च समभूत् । ततो गजेन्द्रारूढो वन्दिभिस्तूयमानो भेरीमृदङ्गादिघोषैर्जगद्बधिरीकुर्वन् पौरामात्यपरिवृतो भोजराजो राजभवनमगात् राजा च तमालिङ्ग्य रोदिति भोजोऽपि रुदन्तं मुञ्जं निवार्य्य अस्तौषीत् ततः सन्तुष्टो राजा निज सिंहासने तस्मिन्निवेशयित्वा छत्रचामराभ्यां भूषयित्वा तस्मै राज्यं ददौ निजपुत्रेभ्यः प्रत्येकमेकैकं ग्रामं दत्वा परमप्रेमास्पदं जयन्तं भोजनिकाये निवेशयामास । ततः परलोकपरित्राणो मुञ्जोऽपि निजपट्टराज्ञीभिः सह तपोवनभूमिं गत्वा परन्तपस्तेपे ततो भोजभूपालश्च द्विजब्राह्मणप्रसादाद्राज्यं पालयामास ।

इति भोजराजस्य राज्यप्राप्तिप्रबन्धः ।

ततो मुञ्जे तपोवनं याते बुद्धिसागरं मुख्यामात्यं विधाय स्वराज्यं बुभुजे भोजराजभूपतिः एवमतिक्रामति काले कदाचिद्राज्ञा क्रीड़तोद्यानं गच्छता कोऽपि धारानगरवासी विप्रो लक्षितः । स च राजानं वीक्ष्य नेत्रे निमील्य आगच्छन् राज्ञा पृष्टः द्विज ! त्वं मां दृष्ट्वा न स्वस्तीति जल्पसि विशेषेण लोचने निमीलयसि तत्र को हेतुरिति ? विप्र आह

देव ! त्वं वैष्णवोऽसि, विप्राणां नोपद्रवं करिष्यसि, ततस्त्वत्तो न मे भीतिः किन्तु कस्मैचित् किमपि न प्रयच्छसि, तेन तव दाक्षिण्यमपि नास्ति, अतस्ते किमाशीर्वचसा ? किञ्च प्रातरेव कृपणमुखावलोकनात् परतोऽपि लाभहानिः स्यात्, इति लोकोक्त्या लोचने निमिलिते ।

अपि च । प्रसादो निष्फलो यस्य कोपश्चापि निरर्थक
न तं राजानमिच्छन्ति प्रजाः षण्डमिव स्त्रियः ॥
अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् ।
यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥

देव ! मत्पिता वृद्धः काशीं प्रतिगच्छन् मया शिक्षां पृष्टः तात ! मया किं कर्त्तव्यमिति ? पित्रा चेत्थमभ्यधायि ।

यदि तव हृदयं विद्वन् ! सुनयं स्वप्नेऽपि मासम सेविष्टाः।
सचिवजितं षण्डजितं युवतिजितं चैव राजानम् ॥
पातकानां समस्तानां द्वे परे तात ! पातके ।
एकं दुस्सचिवो राजा, द्वितीयश्च तदाश्रयः ॥
अविवेकमतिर्नृपतिर्मन्त्रिषु गुणवत्सु वक्रितग्रीवः ।
यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः
राजा सम्पत्तिहीनोऽपि सेव्यः सेव्यगुणाश्रयः ।

अवस्थाजीवनं तस्मात् फलं कालान्तरादपि ॥

अदातुर्दीर्घायुष्यं न हि भवति देव ! पुरा कर्ण-दधीचिशिबिविक्रमप्रमुखाः क्षितिपतयो यथा पर-लोकमलंकुर्वाणाः निजदानसमुद्भूतदिव्यनवगुणैर्निव सन्ति महीमण्डले, तथा किमपरे राजानः ।

देहे पातिनि का रक्षा यशो रक्ष्यमपातवत् ।
नरः पतित कायोऽपि यशः कायेन जीवति ॥
पण्डिते चैव मूर्खे च बलवत्यपि दुर्बले ।
ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥
निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति ।
तस्माद्देहेष्वनित्येषु कीर्त्तिमेकामुपार्जयेत् ॥
जीवितं तदपि जीवितमध्ये गण्यते सुकृतिभिः किमु पुंसां ।
ज्ञानविक्रमकलाकुललज्जात्यागभोगरहितं विफलं यत्

राजापि तेन वाक्येन पीयूषपूरस्नात इव पर-ब्रह्मणि लीन इव लोचनाभ्यां हर्षाश्रूणि मुमोच प्राह च द्विजं विप्रवर । शृणु ।

सुलभाः पुरुषा लोके सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥
मनीषिणः सन्ति न ते हितैषिणो
हितैषिणः सन्ति न ते मनीषिणः ।

सुहृच्च विद्वानपि दुर्लभो नृणां
यथौषधं स्वादु हितञ्च दुर्लभम् ॥

इति विप्राय लक्षं दत्वा किं ते नामेत्याह, विप्रः स्वनाम भूमौ लिखति गोविन्द इति राजा वाचयित्वा विप्र प्रत्यहं राजभवनमागन्तव्यं न ते कश्चिन्निषेधः, विद्वांसः कवयश्च कौतुकात् सभामानेतव्याः, कोऽपि विद्वान् न खलु दुःखभागी भवति एनमधिकारं प्राप्येत्याह, एवं गच्छत्सु कतिपयदिवसेषु राजा विद्वत्प्रियः दानविक्तेश्वर इति प्रथामगात्। ततो राजानं दिदृक्षवः कवयो नानादिग्भ्यः समागताः। एवं वित्तादिव्ययं कुर्वाणं राजानं प्रति कदाचित् मुख्यामात्येनेत्यमभ्यधायि देव! राजानः कोशबला एव विजयिनो नान्ये।

स जयी वरमातङ्गा यस्य तस्यास्ति मेदिनी।
कोशो यस्य सुदुर्धर्षो दुर्गो तस्य सुदुर्जयः॥

देव! लोकं पश्य।

प्रायो धनवतामेव धने तृष्णा गरीयसी।
पश्य कोटिद्वयासक्तं लक्षाय प्रवणं धनुः॥

इति राजा च तमाह।

दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते

पुंसां समाहिता लक्ष्मीरलक्ष्मीः क्रमशो भवेत्।

इत्युक्त्वा राजा तं मन्त्रिणं निजपदाद् दूरीकृत्य तत्पदेऽन्यन्दिदेश आह च तम्।

लक्षं महाकवेर्देयं तदर्धं विबुधस्य च।
देयं ग्रामैकमर्धस्य तस्याप्यर्धं तदर्थिनः॥

यश्च मे आमात्यादिषु वितरणनिषेधमनाः स हन्तव्यः। उक्तञ्च।

यद्ददाति यदश्नाति तदेव धनिनान्धनम्।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि॥

प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः।
अगच्छन् काङ्क्ष्यते लोकैर्वारिदो न तु वारिधिः॥

संग्रहैकपरः प्रायः समुद्रोऽपि रसातले।
दातारं जलदं पश्य गर्जन्तं भुवनोपरि॥

एवं वितरणशालिनं भोजराजं श्रुत्वा कश्चित् कलिङ्गदेशात् कविरुपेत्य मासमात्रं तस्थौ न च क्षौणीन्द्रदर्शनं भवति, आहारार्थं पाथेयमपि नास्ति ततः कदाचिद्राजा मृगयाभिलाषी वहिर्निर्गतः स कविर्दृष्ट्वा राजानमाह,

दृष्टे श्रीभोजराजेन्द्रे गलन्ति त्रीणि तत्क्षणात्।
शत्रोः शस्त्रं कवेः कष्टं नीवीबन्धो मृगीदृशाम्॥

राजा लक्षं ददौ, ततस्तस्मिन् मृगयारसिके राजनि कश्चन पुलिन्दपुत्रो गायति तद्गीतमाधुर्य्येण तुष्टो राजा तस्मै पुलिन्दपुत्राय पद्मलक्षं ददौ, तदा कविः तद्दानमत्युन्नतं किरातपोतस्य दृष्ट्वा नरेन्द्रपाणिकमलस्थपङ्कजमिषेण राजानं वदति।

एते गुणाः पङ्कज ! सन्तोऽपि न ते प्रकाशमायान्ति।
यल्लक्ष्मी वसतेस्तवमधुपैरुपभुज्यते कोशः॥

भोजस्तमभिप्रायं ज्ञात्वा पुनर्लक्षमेकं ददौ, ततो राजा ब्राह्मणमाह।

प्रभुभिः पूज्यते विप्र ! कलैव न कुलीनता।
कलावान् मान्यते मूर्ध्नि सत्सु देवेषु शम्भुना॥

एवं वदति भोजेऽपि कुतोऽपि पञ्चषाः कवयः समागताः, तान् दृष्ट्वा राजा विलक्षण इवासीत्, अद्यैव मया एतावद्वित्तं दत्तमिति, ततः कविस्तमभिप्रायं ज्ञात्वा रूपं पद्ममिषेण पुनः प्राह।

किं कुप्यसि कस्मै वा नवसौरभसाराय हि निजमधुने।
यस्य कृते शतपत्र तेऽद्य प्रतिपत्रं लुप्यते भ्रमरैः॥

ततः प्रभुं प्रसन्नवदनमवलोक्य प्रकाशेन प्राह।

न दातु नोपभोक्तुश्च शक्नोति कृपणः श्रियं
किन्तु स्पृशति हस्तेन नपुंसक इव स्त्रियम्।

याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान् भवेत्
तं दृष्ट्वाप्यथवा श्रुत्वा नरः स्वर्गमवाप्नुयात् ॥

ततस्तुष्टो राजा पुनरपि कलिङ्गदेशवासिकवये लक्षं ददौ, ततः पूर्वकविः पुरःस्थितान् षट्कवीन्द्रान् दृष्ट्वाह हे कवयोऽत्र महासरमृसेतुभूमौ वासी राजा यदा भवनं गमिष्यति । तदा किमपि ब्रूतेति ते च सर्वे महाकवयोऽपि सर्वं राज्ञः प्रथमचेष्टितं ज्ञात्वा वर्त्तन्ते तेष्वेकः सरोमिषेण नृपं प्राह ।

आगतानामपूर्णानां पूर्णानामप्यगच्छताम् ।
यदध्वनि न सङ्घट्टो घटानां तत् सरोवरम् ॥

इति । तस्य राजा लक्षं ददौ ततो गोविन्दपण्डितस्तान् दृष्ट्वा चुकोप, तस्य कोपाभिप्रायं ज्ञात्वा द्वितीयः कविराह ।

कस्य तृषं न क्षपयसि पिबति न कस्तव पयः प्रविश्यान्तः ।
यदि सन्मार्गसरोवर ! नक्रो न क्रोडमधिवसति ॥

राजा तस्मै लक्षद्वयं ददौ, तत्र गोविन्दपण्डितं व्यापारपदा दूरीकृत्य त्वयापि सभायामागन्तव्यं, परन्तु केनापि दौष्ट्यं न कर्त्तव्यम् इत्युक्त्वा ततस्तेभ्यः प्रत्येकं लक्षं दत्वा स्वनगरमागतः ते च यथायथं गताः ततः कदाचिद्राजा मुख्यामात्यं प्राह ।

प्रियोऽपि यो भवेन्मूर्खः स पुराद्बहिरस्तु मे।
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम॥

इति। अतः कोऽपि न मूर्खोऽभूत् धारानगरे, ततः क्रमेण पञ्चशतानि विदुषां वररुचिबाणमयूररेफणहरिशङ्करकच्छिङ्गकर्पूरविनायकमदनविद्याविनोदकोकिलतारेन्द्रमुख्याः सर्वशास्त्रविचक्षणाः सर्वे सर्वज्ञाः श्रीभोजराजसभामलञ्चक्रुः एवं स्थिते कदाचिद्विद्वद्वृन्दवन्दिते सिंहासनासीने कविशिरमणौ कवित्वप्रिये विप्रप्रियबान्धवे भोजेश्वरे द्वारपाल एत्य प्रणम्य व्यजिज्ञपत् देव! कोऽपि विद्वान् द्वारि तिष्ठतीति अथ राजा प्रवेशय तमिति आचष्टे सोऽपि दक्षिणेनपाणिना समुन्नतेन विराजमानो विप्रः प्राह। राजन्नभ्युदयोऽस्तु शङ्करकवे! किं पत्रिकायामिदम्? पद्यं कस्य तवैव भोजनृपते! तत् पठ्यतां पठ्यते।

एतासामरविन्दसुन्दरदृशां द्राक् चामरान्दोलनादुद्वेल्लद्भुजवल्लिकङ्कणझणत्कारः क्षणं वार्य्यताम्॥

यथा यथा भोजयशो विवर्द्धते सितं त्रिलोकीमिव कर्त्तुमुद्यतम्।
तथा तथा मे हृदयं विदूयते प्रियालकालीधवलत्वशङ्कया।

ततो राजा शङ्करकवये द्वादशलक्षं ददौ सर्वे विद्वांसश्च विच्छायवदना बभूवुः परं कोऽपि राजभयान्नावदत्, राजा च कार्य्यवशात् गृहं गतः ततो विभूपालांसभां दृष्ट्वा विबुधगणस्तं निनिन्द । अहो नृपतेरज्ञता किमस्य सेवया ! वेदशास्त्रविचक्षणेभ्यः स्वाश्रयकविभ्यः लक्षमदात् । किमनेन वितुष्टेनापि असौ च केवलं ग्राम्यःकविः शङ्करः किमस्य प्रागल्भ्यम् इत्येवं कोलाहलरवे जाते कश्चिदभ्यगात् कनकमणिकुण्डलशाली दिव्यांशुकप्रावरणो नृपकुमार इव कृगतदपङ्कजाङ्कितगात्रो नवकुसुमसमभ्यर्चित शिराश्चन्दनाङ्गरागेण विलोभयन्, विलास इव मूर्त्तिमान् कवितेव तनुमाश्रितः शृङ्गाररसस्य स्यन्द इव सस्यन्दो महेन्द्र इव महीवलयं प्राप्तो विद्वान्, तं दृष्टा सा विद्वत्परिषत् स च सर्वान् प्रणिपत्य प्राह कुत्र भोजनृप इति ? ते तमूचुरिदानीमेव सौधान्तरगत इति । ततोसौ प्रत्येकं तेभ्यस्ताम्बूलं दत्वा गजेन्द्रकुलगतः मृगेन्द्र इवासीत् ततः स महापुरुषः शङ्करकविप्रदानेन कुपितान् तान् बुद्धा प्राह भवद्भिः शङ्करकवये द्वादशलक्षाणि प्रदत्तानीति न मन्तव्यम् अभिप्रायस्तु राज्ञो नैव बुद्धः,

यतः शङ्करपूजने प्रारब्धे शङ्करकविस्त्वेकेनैव लक्षेण पूजितः, किन्तु तन्निष्ठान् तन्नाम्ना विभाजितानेकादशरुद्रान् शङ्करानपरान् मूर्त्तीन् प्रत्यक्षान् ज्ञात्वा तेषां प्रत्येकमेकैकं लक्षं तस्मै शङ्करकवय एव शङ्करमूर्त्तये प्रदत्तमिति राज्ञोऽभिप्राय इति। सर्वैऽपि चमत्कृतास्तेन। ततः कोऽपि राजपुरुषः तद्विद्वत्स्वरूपं द्राग् राज्ञे निवेदयामास। राजा च स्वमभिप्रायं साक्षाद्विदितवन्तं तं महेशमिव महापुरुषं मन्यमानः सभामभ्यागात् स च स्वस्तीत्याह राजानं राजा च तमालिङ्ग्य प्रणम्य निजकरकमलेन तत्करकमलमवलम्ब्य सौधान्तरं गत्वा प्रोत्तुङ्गवासे उपविष्टः प्राह, विप्र! भवन्नाम्ना कान्यक्षराणि सौभाग्यवलक्षितानि, कस्य वा देशस्य भवद्विरहः सुजनान् बाधत इति? ततः कविर्लिखति राज्ञो हस्ते कालिदास इति राजा वाचयित्वा पादयोः पतति ततस्तत्रासीनयोः कालिदासभोजराजयो रासीत् सन्ध्या, राजा सखे सन्ध्यां वर्णयेत्यवादीत्।

व्यसनिन इव विद्या क्षीयते पङ्कजश्रीः
गुणिन इव विदेशे दैन्यमायान्ति भृङ्गाः।

कुनृपतिरिव लोकं पीडयत्यन्धकारो
धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥
पुनश्च राजानं स्तौति कविः,
उपचारः कर्त्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः ।
उत्पन्नसौहृदानामुपचारः कैतवं भवति ॥
दत्ता तेन कविभ्यः पृथ्वी सकलापि कनकसम्पूर्णा ।
दिव्यां सुकाव्यरचना क्रमं कविनाथ यो विजानाति ॥
सुकवेः शब्दसौभाग्यं सत्कविर्वेत्ति नापरः ।
वन्ध्या न हि विजानाति परां दौहृदसम्पदम् ॥

इति. ततः क्रमेण भोजकालिदासयोः प्रीतिराजायत, ततः कालिदासं वेश्यालम्पटं ज्ञात्वा तस्मिन् सर्वे द्वेषं चक्रुः न कोऽपि तं स्पृशति, अथ कदाचित् सभामध्ये कालीदासमालोक्य भोजेन मनसा चिन्तितं कथमस्य प्राज्ञस्यापि स्मरपीडाप्रमाद इति सोऽपि तदाभिप्रायं ज्ञात्वा प्राह ।

चेतोभुवश्चापलताप्रसङ्गे का वा कथा मानुषलोकभाजाम् ।
यद्दाहशीलस्य पुरा विजेतुः तथाविधंपौरुषमर्धमासीत् ॥

ततस्तुष्टो भोजराजः प्रत्यक्षर लक्षं ददौ ॥ ततः कालिदासः भोजं स्तौति ।

महाराज ! श्रीमन् ! जगति यशसा ते धवलिते
पयः पारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं करिवरमभौमं कुलिशभृत्
कलानाथं राहुः कमलभवनोऽहंसमधुना ॥
नीरक्षीरं गृहीत्वा निखिलखगततिर्याति नालीक-
जन्मा
चक्रं धृत्वा तु सर्वानटति जलनिधींश्चक्रपाणिर्मुकुन्दः ।
सर्वानुत्तुङ्गशैलान् दहति पशुपतिः फालनेत्रेण पश्यन्
व्याप्ता त्वत्कीर्त्तिकान्ता त्रिजगति नृपते भोजराज-
क्षितीन्द्र ॥
विद्वद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः
कैलासञ्च निरीक्ष्य तत्र लघुतां निक्षिप्तवान् पूर्त्तये ।
उक्षाणं तदुपर्य्युमासहचरं तन्मूर्द्ध्नि गङ्गाजलं
तस्याग्रे फणिपुङ्गवं तदुपरि स्फारं सुधादीधितिम् ॥
स्वर्गाद्गोपाल ! कुत व्रजसि ? सुरमुने ! भूतले काम
धेनोः
वत्सस्यानेतुकामस्तृणचयमधुना मुग्धदुग्धं न तस्याः ।
श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीड़शुष्कस्तनी सा
व्यर्थो हि स्यात्प्रयासस्तदपि तदरिभिश्चर्बितं सर्व-
मुर्व्याम् ॥

तुष्टो राजा प्रत्यक्षरलक्षं ददौ ततः कदाचित् श्रुतिस्मृतिसारं गताः केचिद्राजानं कवित्वप्रियं ज्ञात्वा कश्चिन्नगराद्बहिः भुवनेश्वरीप्रसादेन कवित्वं करिष्याम इत्युपविष्टाः तेष्वेकेन पण्डितम्मन्येन एकश्चरणो पाठि भोजनं देहि राजेन्द्रेति अन्येनापाठि घृतसूपसमन्वितमिति उत्तरार्द्धं न स्फुरति ततो देवताभवनं कालिदासः प्रणामार्थमगात् तं वीक्ष्य द्विजा ऊचुः अस्माकं समग्रवेदविदामपि भोजः किमपि नार्पयति भवादृशां हि यथेष्टं दत्ते ततोऽस्माभिः कवित्वविधानधियात्रागतं चिरं विचार्य्य पूर्वार्द्धमभ्यधायि उत्तरार्द्धं कृत्वा देहि ततोऽस्मभ्यं किमपि प्रयच्छतीत्युक्त्वा तत्पुरस्तादर्थमभाणि स च तच्छ्रुत्वा माहिषञ्च शरच्चन्द्रचन्द्रिकाधवलं दधीत्याह ते च राजभवनं गत्वा दौवारिकानूचुः वयं कवित्वं कृत्वा समागताः राजानं दर्शयतेति ते च कौतुकात् हसन्तो गत्वा राजानं प्रणम्य प्राहुः।

राजमाषनिभैर्दन्तैः कटिविन्यस्तपाणयः।
द्वारि तिष्ठन्ति राजेन्द्र छान्दसाः श्लोकशत्रवः॥

इति। राज्ञा प्रवेशितास्ते दृष्टराजसंसदो मिलिताः सन्तः कवितां पठन्ति स्म राजा तच्छ्रुत्वा उत्तरार्द्धं

कालिदासेन कृतमिति ज्ञात्वा विप्रानाह, येन पूर्वार्द्धं कारितं तन्मुखात्कवित्वं कदाचिदपि न करणीयम्, उत्तरार्द्धस्य किञ्चिद्दीयते न पूर्वार्द्धस्येत्युक्त्वा प्रत्यक्षरलक्षं ददौ। तेषु च दक्षिणामादाय गतेषु कालिदासं वीक्ष्य राजा प्राह, कवे! उत्तरार्द्धं त्वया कृतमिति कविराह।

अधरस्य मधुरिमाणं कुचकाठिन्यं दृशोश्च तैक्ष्ण्यम्।
कवितायां परिपाकं ह्यनुभवरसिको विजानाति॥

राजा च सुकवे! सत्यं वदसि।

अपूर्वो भाति भारत्याः काव्यामृतफले रसः।
चर्वणे सर्वसामान्ये स्वादुवित् केवलं कविः॥

सञ्चिन्त्य सञ्चिन्त्य जगत् समस्तं त्रयः पदार्था हृदयं प्रविष्टाः।
इक्षोर्विकारा मतयः कवीनां मुग्धाङ्गनापाङ्गतरङ्गितानि॥

ततः कदाचिद्द्वारपालकः प्रणम्य भोजं प्राह, राजन्! द्राविड़देशात् कोऽपि लक्ष्मीधरनामा कविर्द्वारमध्यास्त इति। राजा प्रवेशयेत्याह प्रविष्टमिव सूर्य्यमिव विभ्राजमानं चिरादप्यविदितवृत्तान्तं प्रेक्ष्य राजा विचारयामास आह च

आकारमात्रविज्ञानसम्पादितमनोरथाः।
धन्यास्तेऽन्ये न शृण्वन्ति दीनाः कार्यार्थिनां गिरः॥
स चागत्य तत्र राजानं स्वलीलया तदाज्ञयोपविष्टः प्राह देव! इयं ते पण्डितमण्डिता सभा, त्वञ्च साक्षाद्विष्णुरसि ततः किं नाम पाण्डित्यं मम तथापि किञ्चिद्वच्मि॥
भोजप्रतापन्तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम्।
हरेः करे भूत्पविरम्बरेच भानोः पयोधेरुदरे कृशानुः
इति तत्क्षणे परिषच्चमत्कृता राजा च तस्य प्रत्यक्षरलक्षं ददौ पुनः कविराह देव! मया सकुटुम्बेनात्र निवासाश्रया समागतम्।
क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते।
अनुकूलः शुचिर्दक्षः कविर्विद्वान् सुदुर्लभः॥
इति। ततो राजा मुख्यामात्यं प्राह।स्मै गृहं दीयतामिति। ततो निखिलमपि नगरं विलोक्य कमपि मूर्खममात्यो नापश्यत् यं निरस्य विदुषे गृहं दीयते तत्र सर्वत्र भ्रमन् कस्यचित् कुविन्दस्य गृहं वीक्ष्य कुविन्दं प्राह कुविन्द! गृहान्निःसर तव गृहं विद्वानेष्यतीति ततः कुविन्दो राजभवन

राजभवनमासाद्य राजानं प्रणम्य प्राह, देव! भवदमात्यो मां मूर्खं कृत्वा गृहान्निःसारयतीति त्वं तु पश्य मूर्खः पण्डितो वेति।

काव्यं करोमि न हि चारुतरं करोमि
यत्नात्करोमि, यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ!
हे साहसाङ्क! कवयामि वयामि यामि॥

ततो राजा तङ्कारवादेन वदन्तं कुविन्दं प्राह!
ललिता ते पदपङ्क्तिः कवितामाधुर्य्यं च शोभनम्।
परन्तु कवित्वं विचार्य्य वक्तव्यम् इति। ततः कुपितः कुविन्दः प्राह देव! अत्रान्तरं भाति किन्तु न वदामि राजधर्म्मः पृथक् विद्वद्धर्मादिति। राजा प्राह, अस्ति चेदुत्तरं ब्रूहीति। देव! कालिदासादृतेऽन्यं कविं न मन्ये। कोऽस्ति ते सभायां कालिदासादृते कवितातत्त्वविद्विद्वान्?

यत् सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं
तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम्।
कासारे दिवसं वसन्नपि पयः पूरम्परं पङ्किलं
कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः?॥
अयं मे वाग्गुम्फो विमदपदवैदग्ध्यमधुरः

स्फुरद्गन्धो बन्धः परहृदि कृतार्थः कविहृदि ।
कटाक्षो वामाक्ष्यादरदलितनेत्रान्तगलितः
कुमारे निःसारः स तु किमपि यूनः सुखयति ॥

इति ॥ विद्वज्जनवन्दिता बाला प्राह,

विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे ।
निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी ॥

ततः कुविन्दः प्राह,

बाल्ये सुतानां सुरतेऽङ्गनानां
स्तुतौ कवीनां समरे भटानाम् ।
त्वंकारयुक्ता हि गिरः प्रशस्ताः
कस्ते प्रभो मोहतरः स्मरत्वम् ॥

ततो राजा साधु भोः ! कुविन्देत्युक्त्वा तस्याक्षरलक्षं ददौ माभैषीरिति पुनः कुविन्दं प्राह, एवं क्रमेणातिक्रान्ते कियत्यपि काले बाणः पण्डितवरः परं राज्ञा मान्यमानोऽपि प्राक्तनकर्मतो दारिद्र्यमनुभवति, एवं स्थिते नृपतिः कदाचिद्रात्रावेकाकी प्रच्छन्नवेशः स्वपुरे चरन् बाणगृहमेत्यातिष्ठत् तदा निशीथे बाणो दारिद्र्याद्व्याकुलतया कान्तां वक्ति देवि ! राजा कियद्वारं मम मनोरथमपूरयत् अद्यापि पुनः प्रार्थितो ददात्येव परन्तु निरन्तरप्रार्थनास्वे

मूर्खस्यापि जिह्वा जड़ीभवतीत्युक्त्वा मुहूर्त्तार्द्धं मौनेन स्थितः । पुनः पठति ।

हर हर पुरहरपरुषं क्व हालाहलफल्गुयाचनावचसोः
एकैव तव रसना। तदुभयरसतातस्यज्ञा ।
देवि ! दरिद्रस्यापरा मूर्त्तिर्याच्ञा न द्रविणान्यति
यदि कौपिनवान् शम्भुस्तथापि परमेश्वरः ॥

देवासुखानां व्यसनं धनानां
याच्ञा गुरुणां कुनृपः प्रजानाम् ।
प्रणष्टशीलस्तु सुतः कुलानां
मूलावघातः कठिनः कुठारः ॥

तत् सत्यपि दारिद्र्ये राज्ञो वक्तुं मया स्वयमशक्यं गच्छन् क्षणमपि जलदो वल्लभतामेति सर्वलोकस्य नित्यप्रसारितकरः करोति सूर्य्योऽपि सन्तापं किञ्च देवि ! वैश्वदेवावसरे प्राप्ताः क्षुधार्त्ताः पश्चाद्यान्तीति तदेव मे हृदयं धुनोति ॥

दारिद्र्यानलसन्तापः शान्तः सन्तोषवारिणा ।
याचकाशाविघातान्तर्दाहः केनोपशाम्यते ?

राजा चैतत्सर्वं श्रुत्वा नेदानीं किमपि दातुं योग्यः प्रातरेव बाणं पूर्णमनोरथं करिष्यामीति निष्क्रान्तो राजा ।

कृतो यैर्न च वाग्मी च व्यसनीतं नयैः पदम् ।
यैरात्मसदृशो नार्यो किं तैः काव्यैर्धनैर्धनैः ?

एवं पुरे परिभ्रममाणे राजनि वर्त्मनि चोरद्वयं गच्छति तयोरेकः प्राह शकुन्तकः- सखे ! स्फाराान्धकारवितते ऽपि जगति अञ्जनवशात्सर्वं परमाणुप्रायमपि वस्तु सर्वत्र पश्यामि, परन्तु सम्भारम्भाहानीतकनकजातमपि न मे सुखायेति द्वितीयो मरालनामा चौर आह आहृतं सम्भारम्भाहात् कनकजातमपि न हितमिति कस्माद्धेतोरुच्यते इति । ततः शकुन्तकः प्राह, सर्वतो नगररक्षकाः परिभ्रमन्ति सर्वोऽपि जागरिष्यत्येषां भेरीपटहादीनां निनादेन तस्मादाहृतं विभज्य स्वस्वभागागतं धनमादाय शीघ्रमेव गन्तव्यमिति मरालः प्राह सखे ! त्वमनेन कोटिद्वयपरिमितमणिकनकजातेन किं करिष्यसीति ? शकुन्तकः- एतद्धनं कस्मैचिद्द्विजन्मने दास्यामि यथायं वेदवेदाङ्गपारगो अन्यन्न प्रार्थयति मरालः- सखे ! चारु !

ददतो युध्यमानस्य पठतः पुलकोऽस्य चेत् ।
आत्मनश्च परेषाञ्च तद्दानं पौरुषं स्मृतम् ॥

मराल ! अनेन दानेनतव कथं पुण्यफलं भविष्यतीति?

अस्माकं पितृपैतामहोऽयं धर्म्मः यच्चौर्य्येण वित्तमानीयते

मरालः धिगस्त्विदमङ्गीकृत्यार्जितं द्रव्यं निखिल-मपि कथं दीयते शकुन्तः ?

मूर्खो न हि ददात्यर्थं नरो दारिद्र्यशङ्कया ।
प्राज्ञस्तु वितरत्यर्थं नरो दारिद्र्यशङ्कया ॥
किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ॥
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥

शकुन्तः-अनेन वित्तेन किं करिष्यति भवान्? मरालः। सखे ! काशीवासी कोऽपि विप्रवटुरत्रागात् तेनास्मा-त्पितुः पुरः काशीवासफलं व्यावर्णितं ततोऽस्म-त्तातः बाल्यादारभ्य चौर्य्यं कुर्वाणो दैववशात् स्वपापान्निवृत्तो वैराग्यात् सकुटुम्बः काशीमेष्यति तदर्थमिदं द्रविणजातम् । शकुन्तः । महद्भाग्यं तव पितुः तथाहि ।

वाराणसीपुरीवासवासनावासितात्मना ।
किं शुना समतां याति वराकः पाकशासनः ॥
क्षपरंकर्द्दीशस्थानां चेत्रं वाराणसी पुरी ।
यत्र संलभ्यते मोक्षः समं चण्डालपण्डितैः ॥
मरणं मङ्गलं यत्र विभूतिश्च विभूषणम् ।
कौपीनं यत्र कौशेयं सा काशी केन मीयते ?

एवमुभयोः संवादं श्रुत्वा राजा तुतोष अचिन्तयच्च मनसि, कर्म्मणां गतिः सर्व्वथैव विचित्रा उभयोरपि पवित्रा मतिरिति। ततो राजा विनिद्रत्य भवनान्तरे पितृपुत्राव पश्यत् तत्र पिता पुत्रं प्राह इदानीं परिज्ञातशास्त्रतत्त्वोऽपि नृपतिः कार्पण्येन किमपि न प्रयच्छति किन्तु।

अर्थिनि कवयति कवयति पठति च पठतिस्तवोन्मुखे स्तौति। पश्चाद्यामीत्युक्ते मौनी दृष्टिं निमीलयति॥

राजाप्येतच्छ्रुत्वा तत्समीपं प्राप्य नैवं वदेति खगात्रात् सर्वाभरणान्युत्ताय्य दत्त्वा तस्मै, ततो गृहमासाद्य कालान्तरे सभामुपविष्टः कालिदासं प्राह सखे!

कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसा॥

ततः कविराह,

यत्पोतेन पयांसीव भुवनानि चतुर्दश॥

ततो राजा प्रत्यक्षरमुक्ताफललक्षं ददौ, ततः प्रविश्यति द्वारपालः देव! कोऽपि कौपिनावशेषो विद्वान् द्वारितिष्ठतीति, राजा प्रवेशय ततः प्रवेशितः कविरागत्य स्वस्तीत्युक्तानुक्त एवोऽविष्टःप्राह,

इह निवसति मेरुः शेखरो भूधराणा

मिह हि निहितभाराः सागराः सप्त चैव।
इदमतुलमनन्तं भूतलं भूरिभूतो-
द्भवधरणसमर्थं स्थानमस्मद्विधानाम्॥

राजा महाकवे! किं ते नाम अभिधत्स्व। कविः। नामग्रहणं नोचितं पण्डितानां, तथापि वदामि यदि जानासि।

न हि स्तनन्धयी बुद्धिर्गम्भीरं गाहते वचः।
तत्त्वं तोयनिधेर्द्रष्टुं यष्टिरस्ति न वैणवी॥

देव! आकर्णय।

च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं
समं चक्रीकृत्य प्रहसितमुखी शैलतनया।
अवोचद्यं पश्येत्यवतु गिरिशः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः॥

कालिदासः। सखे! क्रीडाचन्द्र! चिरात् दृष्टोऽसि कथमीदृशी ते दशा? मण्डले मण्डले विराजत्स्वपि राजनि वङ्ग धनवति! क्रीडाचन्द्रः।

धनिनोऽप्यदानविभवा गण्यन्ते धुरि महादरिद्राणाम्।
हन्ति न यतः पिपासामतः समुद्रोऽपि मरुरेव॥

किञ्च। उपभोगकातराणां पुरुषाणामर्थसञ्चयपराणाम्।
कन्यामणिरिव सदने तिष्ठत्यर्थः परस्यार्थे।

सुवर्णमणिकेयूराडम्बरैरन्यभूभृतः
कलयैव पदं भोज तेषामाप्नोति सारवित् ॥

सुधामयानीव सुधां गलन्ति विदग्धसंयोजनमन्तरेण ।
काव्यानि निर्व्याजमनोहराणि वाराङ्गनानामिव यौव-नानि ॥

ख्यायते जातु नामापि न राज्ञः कविता विना ।
कवेस्तद्व्यतिरेकेण न कीर्त्तिः स्फुरति क्षितौ ॥

मयूरः। ते वन्द्यास्ते महात्मानस्तेषां लोके स्थिरं यशः
यैर्निबद्धानि काव्यानि ये च काव्ये प्रकीर्त्तिताः ॥

वररुचिः । पदव्यक्तिव्यक्तीकृतसहृदया बन्धललिते
कवीनां मार्गेऽस्मिन् स्फुरति बुधमात्रस्य धिषणा ।
न च क्रीड़ालेशव्यसनपिशुनोऽयं कुलवधू
कटाक्षाणां पन्थाः स खलु गणिकानामविषयः ॥

राजा क्रीड़ाचन्द्राय विंशतिगजेन्द्रान् ग्रामपञ्चकञ्च ददौ, ततो राजानं कविः स्तौति ।

कङ्कणं नयनद्वन्द्वे तिलकं करपल्लवे ।
अहो ! भूषणवैचित्र्यं भोजप्रत्यर्थियोषिताम् ॥

तुष्टो राजा पुनरक्षरलक्षं ददौ ततः कदाचित् कोऽपि जराजीर्णसर्वाङ्गसन्धिः पण्डितो रामेश्वर-नामा सभामभ्यगात् स चाह ।

पञ्चाननस्य सुकवेर्गजमांसैश्च पञ्चिधा ।
पारणा जायते क्वापि सर्वत्रैवोपवासिनः ॥
बाह्यानां पण्डितानाञ्च परेषामपरो जनः ।
कवीन्द्राणां गजेन्द्राणां ग्राहको नृपतिः परः ॥

एवं हि । सुवर्णैः पट्टचेलैश्च शोभा स्याद्वारयोषिताम् ।
पराक्रमेण दानेन राजन्ते राजनन्दनाः ॥

इत्याकर्ण्य राजा रामेश्वरपण्डिताय सर्वाभरणान्युत्तार्य्य लक्षद्वयं प्रायच्छत् ततः स्तौति कविः ।

भोज ! त्वत्कीर्त्तिकान्ताया नभोभालस्थितं महत् ।
कस्तूरीतिलकं राजन् ! गुणाकर ! विराजते ॥
बुधाग्रे न गुणान् ब्रूयात् साधु वेत्ति यतः स्वयम् ।
मूर्खाग्रेऽपि च न ब्रूयात् बुधप्रोक्तन्न वेत्ति सः ॥

तेन चमत्कृताः सर्वे । रामेश्वरकविः ।

ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यम् ।
पुष्णाति कमलमम्भो लक्ष्म्या तु रविर्नियोजयति ॥

ततस्तुष्टो राजा प्रत्यक्षरं लक्षं ददौ राजेन्द्रं कविः प्राह,।

कवित्वं न शृणोत्येव कृपणः कीर्त्तिवर्जितः ।
नपुंसकः किं कुरुते पुरःस्थितमृगीदृशा ॥

सीता प्राह, हता दैवेन कवयो वराकास्ते गजा अपि
शोभा न जायते तेषां मण्डलेन्द्रगृहं बिना ॥

कालिदासः । अदातृमानसं क्वापि न स्पृशन्ति कवेर्गिरः ।

दुःखायैवातिवृद्धस्य विलासास्तरुणीकृताः ॥

राजा प्रतिपण्डितं लक्षं दत्तवान्, ततः कदाचिद्राजा समस्तादपि कविमण्डलादधिकं कालिदासमवलोक्य आयान्तं परं वेश्यालोलत्वेन चेतसि खेदलवं चक्रे, तदा सीता विद्वद्वन्दवन्दिता तदभिप्रायं ज्ञात्वा प्राह देव !

दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते ।
प्रीत्यैव शशिनिपतितं पश्यन्ति लोकः कलङ्कमपि ॥

तुष्टो राजा सीतायै लक्षं ददौ तथापि कालिदासं यथापूर्वं न मानयति यदा, तदा स च कालिदासो राज्ञोऽभिप्रायं विदित्वा तुलामिषेण प्राह ।

प्राप्य प्रमाणपदवीं को नामास्ते तुले बलेप ।
नयसि गरिष्ठमधस्तात्तदितरमुच्चस्तरां कुरुषे ॥

पुनराह, यस्यास्ति सर्वत्र गतिः स कस्मात्

स्वदेशरागेण हि याति खेदम् ?

तातस्य कूपोऽयमिति ब्रुवाणाः

क्षारं जलं के पुरुषाः पिबन्ति ? ॥

ततो राज्ञा कृतामवज्ञां मनसि विदित्वा कालिदासो दुर्मनाः निजवेश्म ययौ।

अवज्ञास्फुटितं प्रेम समीकर्तुं क ईश्वरः?
सन्धिं न याति स्फुटितं लाक्षालेपेन मौक्तिकम्॥

ततो राजापि खिन्नः स्थितः, ततो लीलावती खिन्नं दृष्ट्वा राजानं विषादकारणमपृच्छत् राजा च रहसि सर्वं तस्यै प्राह, सा च राजमुखेन कालिदासावज्ञां ज्ञात्वा पुनः प्राह, देव! प्राणनाथ! सर्वज्ञोऽसि।

स्नेहो हि वरमघटितो न वरं सञ्जातविघटितस्नेहः।
हृतनयनो हि विषादी न विषादी भवति स खलु जात्यन्धः॥

परन्तु कालिदासः कोऽपि भारत्याः पुरुषावतारः, तत् सर्वभावेन सन्मानयैनं विद्वद्वरः प्रभो।

दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि
मित्रावसानसमये विहितोदयोऽपि।
चन्द्रस्तथापि हरवल्लभतामुपैति
नैवाश्रितेषु गुणदोषविचारणा स्यात्॥

राजा, प्रिये! सर्वमेतत् सत्यमेवेत्यङ्गीकृत्य श्वः कालिदासं प्रातरेव सन्तोषयिष्यामीत्यवोचत्, अन्येद्यु राजा दन्तधावनादिविधिं विधाय निर्वर्तितनित्य-

कृत्यः सभां प्राप, पण्डिताः कवयश्च गायका अन्ये प्रकृतयश्च सर्वे समाजग्मुः, कालिदास मेकमनागतं वीक्ष्य राजा स्वसेवकमेकं तदाकारणाय वेश्यागृहं प्रेषयामास, स च गत्वा कालिदासं नत्वा प्राह, कवीन्द्र! त्वामाकारयति भोजनरेन्द्र इति। ततः कविर्व्यचिन्तयत्, गतेऽह्नि नृपेणावमानितोऽहमद्य प्रातरेवाकारणे किं कारणमिति?

यं यं नृपोऽनुरागेण सम्मानयति संसदि।
तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः॥

किन्तु विशेषतो प्राज्ञा अन्वर्चं मान्यमाने मयि मायाविनो मत्सराद्वैरं बोधयन्ति।

अविवेकमतिर्नृपतिर्मन्त्रिषु गुणवत्सु वक्रितग्रीव
यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः॥

इति विचारयन् सभामागच्छत् ततो दूरे सभायान्तं वीक्ष्य सानन्दमासनादुत्थाय सुकवे! मत्प्रियतमाद्य कथं विलम्बः क्रियत? इति भाषमाणः पञ्चषड् पदानि सन्मुखो गच्छति ततो निखिलापि सभा आसनादुत्थिता सर्वे सभासदश्च चमत्कृताः वैरिणश्चास्य विच्छायवदनाः बभुवुः ततो राजा निज करकमलेन अस्य करकमलमवलम्ब्य आसनदेशं

प्राप्य तस्य सिंहासने उपवेश्य स्वयञ्च तदाज्ञया तत्रैवोपविष्टः । ततो राज्ञा सिंहासनारूढ़े कालिदासे बाणकविर्दत्त्विषं वाक्यमुद्धृत्य प्राह ।

भोजः कलाविद्गुरुर्वा कालिदासस्य माननात् ।
विबुधेषु कृतो राजा येन दोषाकरोऽप्यसौ ॥

ततोऽस्य विशेषेण विद्वद्भिः सह वैरानलः प्रदीप्तः ततः कैश्चिद्बुद्धिमद्भिः मन्त्रयित्वा सर्वैरपि विद्वद्भिः भोजस्य ताम्बूलवाहिनी दासी धनकनकादिना सम्मानिता ते च तां प्रत्युपायमूचु, सुभगे ! यस्मात्-कीर्त्तिमसौ कालिदासो गलयति, अस्मासु कोऽपि नैतेन कलासाम्यं प्रवहते वत्से ! यथैनं राजा देशान्तरं निःसारयति तद्भवत्या कर्त्तव्यमिति, दासी प्राह, भवद्भ्यो हारं प्राप्य मया युष्मत्कार्यं क्रियते तन्मम प्रथमं हारो दातव्य इति । ततः सा ताम्बूलवाहिनी तैर्दत्तं हारमादाय व्यचिन्तयत्, तया हि बुधैरसाध्यं किं वास्ति ? ततः समतिक्रान्तेषु कतिपयवासरेषु दैवादेकाकिनि प्रसुप्ते राजनि चरणसंवाहनादि सेवामस्य विधाय तत्रैव कपटेन नेत्रे निमील्य सुप्ता ततश्चरणचलनेन राजानमिसज्जा-कं सम्यक् ज्ञात्वा प्राह सखि ! मदनमालिनि !

स दुरात्मा कालिदासः दासीवेषेण अन्तःपुरं प्राप्य लीलादेव्या सह रमयति, राजा तच्छुत्वा उत्थाय प्राह, तरङ्गवति ! किं जागर्षीति ? सा च निद्राव्याकुलेव न शृणोति, राजा च तस्या अपध्वनिं श्रुत्वा व्यचिन्तयत् इयं तरङ्गवती निद्रायां स्वप्नवशङ्गता वासनावशाद्देव्या दुश्चरितं प्राह, स च स्त्रीवेषेणान्तःपुरमागच्छतीत्येतदपि सम्भाव्यते, को नाम स्त्रीचरितं वेदेति । ततस्तेवं विचार्य्य राजा परेद्युः प्रातरात्मनि रुचिमज्वरं विधाय प्रधानः कालिदासं दासीमुखेन आनाय्य तदागमनानन्तरं तथैव लीलादेवीञ्चानाय्य देवीं प्रत्यवदत् प्रिये ! इदानीमेव मयापथ्यं भोक्तव्यमिति इत्युक्ते सापि तथैवेति पथ्यं गृहीत्वा राज्ञो रजतपात्रे दत्त्वा तत्र मुद्गदालीं प्रत्यवेषयत् ततः राजापि तयोरभिप्रायं जिज्ञासमानः श्लोकार्द्धं प्राह ।

मुद्गदाली गदव्याली कविन्द्र ! वितुषा कथम् ?

इति । ततः कालिदासः देव्यां समीपवर्त्तिन्यामपि उत्तरार्द्धं प्राह ।

अन्धो वल्लभसंयोगे जाता विगतकञ्चुकी ।

देवी तच्छ्रुत्वा परिज्ञातार्थस्वरूपा सरस्वती च

तदर्थं विदित्वा स्मेरमुखी मनागिव बभूव राजा-प्येतत् दृष्ट्वा विचारयामास इयं पुरा कालिदासे खिद्यति, अनेन एतस्यां समीपवर्त्तिन्यामपि इत्य-मध्यधायि इयञ्च स्मेरमुखी बभूव स्त्रीणां चरित्रं को वेद।

अश्वप्लुतं वासवगर्जितञ्च स्त्रीणाञ्च चित्तं पुरुषस्य भाग्यम्
अवर्षणञ्चाप्यतिवर्षणञ्च देवे न जानन्ति कुतो मनुष्यः॥

किन्त्वयं ब्राह्मणः दारुणापराधित्वेन हन्तव्य इति। विशेषेण सरस्वत्याः पुरुषावतार इति। विचार्य्य कालिदासं प्राह, कवे! सर्वथा अस्मद्देशे न स्थातव्यं किं बहुनोक्तेन प्रतिवाक्यं किमपि न वक्तव्यं ततः कालिदासोऽपि वेगेनोत्थाय वेश्या-गृहमेत्य तां प्रत्याह प्रिये! अनुज्ञां देहि मयि भोजः कुपितः स्वदेशे न स्थातव्यमित्युवाच अहह!

अघटितघटितानि घटयति यानि पुमान्नैव चिन्तयति॥

किञ्च, किमपि विद्वद्वृन्दचेष्टितमेवेति प्रतिभाति तथाहि

बहूनामल्पसाराणां समवायो दुरत्ययः।
तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः॥

ततो विलासवती नाम वेश्या तं प्राह।

तदेवास्य परं मित्रं यत्र संक्रामति द्वयम्।

दृष्टे सुखस्य दुःखस्य प्रतिच्छायेव दर्पणे ॥

दयितस्त्वपि विद्यमानयां किं ते राज्ञा किं वा राजादत्तेन वित्तेन दार्य्यं सुखेन निःशङ्कं तिष्ठ मत्प्राणान्तःकुहर इति । ततः कालिदासः तत्रैव वसन् कतिपयदिनानि गमयामास ततः कालिदासे गृहात्-न्निर्गते राजानं लीलादेवी प्राह, देव ! कालिदास कविना साकं नितान्तं निबिड़तमा मैत्री तदिदानी मनुचितं कस्मात् कृतं यस्य देशेऽप्यवस्थानं निषिद्धम् ।

इक्षोरग्रात् क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत्सज्जनमैत्री विपरीतानाञ्च विपरीता ॥
शोकाराति परित्राणं प्रीति विस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥

राजाप्यतल्लीलादेवीवचनमाकर्ण्य प्राह, देवि ! केनापि ममेत्याभिधायि यत्कालिदासो दासीवेषेण अन्तःपुरमासाद्य देव्या सह रमत इति । मया चैतद्व्यापारजिज्ञासया कपटज्वरेणायं भवती च वीक्षितौ ततः समीपवर्त्तिन्यामपि त्वय्युक्तार्द्धमित्थं प्राह, तच्चाकर्ण्य त्वयापि कृतो हासः ततश्च सर्व्वमेतत् दृष्ट्वा ब्राह्मणहननभीरुणा मया देशान्निः-

चरितःत्वाञ्च न दाक्षिण्येन हन्मीति। ततः हास्य-परा देवी चमत्कृता प्राह निःशङ्कं देव! अहमेव धन्या यस्यास्त्वं पतिरीदृशः, यत्त्वया भुक्तशीलायाः मम मनः कथमन्यत्र गच्छति? यतः सर्वकामिनीभिरपि कान्तोपभोगे स्मर्त्तव्योऽसि अहह देव! त्वं यदि मां सतीमसतीं वा अज्ञात्वा गमिष्यसि तर्ह्यहं सर्वथा मरिष्य इति। ततो राजापि प्रिये! सत्यं वदसीति। ततः स नृपतिः पुरुषैरग्निमान-यामास तप्तं लोहगोलकं कारयामास धनुश्च सज्ज-श्चक्रे ततो देवी स्नाता निजपातिव्रत्यां नलेन ददी-प्यमाना सुकुमारगात्री सूर्य्यमवलोक्य प्राह जगच्च-क्षुस्त्वं सर्वसाक्षी सर्वं वेत्सि।

जाग्रति स्वप्नकाले च सुषुप्तौ यदि मे पतिः।
भोज एव परन्नान्यो मच्चित्ते भावितोऽसि न॥

इत्युक्त्वा ततो दिव्यञ्चक्रे ततः शुद्धायामन्तःपुरे लीलावत्यां लज्जानतशिराः नृपतिःपश्चात्तापात् पुरो देवि! क्षमस्व पापिष्ठं मां किं वदामीति कथया-मास। राजा च तदाप्रभृति न निद्राति न च भुङ्क्ते न केनचिद्वक्ति केवलमुद्विग्नमनाः स्थित्वा दिवानिशं प्रविलपति, किं नाम मम लज्जा, किं नाम दाक्षिण्यं

क गाम्भीर्य्यं? हाहा! कवे! कविकोटिमुकुटमणे! कालिदास! हा! मम प्राणसम! हा! मूर्खेण किमप्यश्राव्यं श्रावितोऽसि यद्वाच्यमुक्तोऽसीति प्रसुप्त इव ग्रहग्रस्त इव मायाविध्वस्त इव पपात, ततः प्रियाकरकमलसिक्तजलसञ्जातसंज्ञः कथमपि तामेव प्रियां वीक्ष्य स्वात्मनिन्दापरः परमतिष्ठत् ततो निशानाथहीनेव निशा, दिनकरहीनेव दिनश्रीः, वियोगिनीव योषित् शक्ररहितेव सुधर्म्मा न भाति भोजभूपालसभा रहिता कालिदासेन तदाप्रभृति न कस्यचिन्मुखे काव्यं न कोऽपि विनोदसुन्दरं वचो वक्ति ततो गतेषु केषुचिद्दिनेषु कदाचिद्राकापूर्णेन्दुमण्डलं पश्यन् पुरस्य लीलादेवीमुखेन्दुं वीक्ष्य प्राह, तुलयं च्छणुअणुसरइ श्लौसीमुहचन्दसखुए दाये कुत च पूर्णोऽपि चन्द्रमसि नेत्रविलासाः कदा वाचो विलसितं प्रातश्चोत्थितः प्रातर्विधोन्विधाय सभां प्राप्य राजा विद्वद्वरान् प्राह अहो कवयः! इयं समस्या पूर्य्यतां ततः पठति तुलयं च्छणुअणुसरइ श्लौसीमुहचन्दसखुए दाये पुनराह इयञ्चेत् समस्या न पूर्य्यते भवद्भिः, मद्देशे न स्थातव्यमिति ततो भीतास्ते कवयः स्वानि स्वानि गृहाणि जग्मुः,चिरं विचा-

ऽप्यर्थे कस्यापि नार्थसंगतिः स्फुरति, ततः सर्वैर्मिलित्वा बाणः प्रेषितः ततः सभां प्राप्याह राजानं देव! सर्वैर्विद्वद्भिरहं प्रेषितः अष्टवासरान्तरवधिमभिधेहि, नवमेऽह्नि पूरयिष्यन्ति, ते न चेद्देशान्निर्गच्छन्ति ततो राजा अस्त्वित्याह । ततो बाणः तेषां विज्ञाप्य राजसन्देशं स्वगृहमगात् ततोऽष्टौ दिवसाः अतीताः, अष्टमदिनरात्रौ मिलितेषु तेषु कविषु बाणः प्राह, अहो! तारुण्यमदेन राजसम्मानमदेन किञ्चिद्विद्यामदेन कालिदासो निःसारितोऽभवत् सर्वे भवन्तः सर्व एव कवयः विषमे स्थाने तु स एक एव कविः, तं निःसार्य इदानीं किं नाम महत्त्वमासीत् स्थिते तस्मिन् कथमियमवस्थास्माकं भवेत् तन्निःसारे या या बुद्धिः कृता सा भवद्भिरेव अनुभूयते ।

सामान्यविप्रद्वेषे च कुलनाशो भवेत् किल ।
उमारूपस्य विद्वेषे नाशः कविकुलस्य हि ॥

ततः सर्वे गाढं कलहायन्तस्ते मयूराद्यश्च ततस्ते सर्वान् कलहान्निवार्य सद्यः प्राहुः, कालिदासमन्तरेण न कस्यचित्सामर्थ्यमस्ति समस्यापूरणे।

संग्रामेषु भटेन्द्राणां कवीनां कविमण्डले ।

दीप्तिर्वादीप्तिहानिर्वा मुहूर्त्तेनैव जायते ॥

यदि रोचते ततोऽद्यैव मध्यरात्रे प्रमुदितचन्द्र-मपि निगूढमेव गच्छामः सम्पत्तिसम्भारमादाय यदि न गम्यते श्वो राजसेवका अस्मान् बलान्निःसारयन्ति तदा देहमात्रेणावाभिर्गन्तव्यं तदाद्य मध्यरात्र गमिष्याम इति सर्वे निश्चित्य गृहमागत्य बलीवर्दव्यूढेषु शकटेषु सम्पद्भारमारोप्य रात्रावेव निष्क्रान्ताः ततः कालिदासः तस्यैव रात्रौ विलासवतीमदनोद्याने वसन् पथि गच्छतां तेषाङ्गिरं श्रुत्वा वेश्याचेटीं प्रेषितवान् भद्रे! पश्य क एते गच्छन्ति ब्राह्मणा इव ततः सा समेत्य सर्वानपश्यत् उपेत्य च कालिदासं प्राह ।

एकेन राजहंसेन या शोभा सरसो भवत् ।
न शावकसहस्त्रेण परितस्तीरवासिना ॥

सर्वे च वाग्मयूरप्रमुखाः पलायन्ते नात्र संशय इति । कालिदासः प्रिये ! वेगेन वासांसि भवनादानय यथा पलायमानान् विप्रान् रक्षामि ।

किं पौरुषं रक्षति यो न वार्त्तान्
किं वा धनं नार्थिजनाय यत् स्यात् ।
सा किं क्रिया या न हितानुबद्धा

किं जीवितं साधुविरोधि यद्वै ॥

ततः स कालिदासश्चारवेषं विधाय खड्गमुद्वहन् कोशार्द्धं मुक्तरं गत्वा तेषामभिमुखमागत्य सर्वान्निरूप्य जयेत्याशीर्वचनमुदीर्य पप्रच्छ चारवभाषामा अहो विद्यावारिधयो ! भोजसभायां सम्मा ममहत्वातिशयाः इहस्यतय इव सम्भूय कुत्र जिगमिषवो भवन्तः कच्चित् कुशलं वो ? राजा च कुशली अस्माभिः काशीदेशादागम्यते भोजदर्शनाय वित्तस्पृहया च ततः परिहासं कुर्व्वन्तः सर्वे निष्क्रान्ताः ततस्तेषु कश्चित्तद्गिरमाकर्ण्य तस्य चारत्वं मन्यमानः कुतूहलेन विपश्चित् प्राह भो चारण ! शृणु त्वया पश्चादपि श्रोष्यत एव अतो मया अद्यैवोच्यते राज्ञा किलैभ्यो विद्वद्भ्यः पुरणाय समस्योक्ता तत्पूरणाशक्ताः कुपितराज्ञा देशान्तरे कश्चिज्जिगमिषव एते निश्चक्रमुः । चारणः राज्ञाका वा समस्या प्रोक्ता ततः पठति स विपश्चित् तुलणं अणु अणुसरह् ल्लोषो मुहचन्द सखुए दाये चारणः एतात्सध्येव गढार्थम् एतत् पूर्णेन्दुमण्डलं वीक्ष्य राज्ञा पाठि एतस्योरार्द्धमिदं भवितुमर्हति अणुदहि बाबायदि कह अणु किदित सपड़िपहिचन्दस सर्वे

श्रुत्वा च मत्कृतः ततः चारणाः सर्वान् प्रणिपत्य
निर्ययौ ततः सर्वे विचारयन्ति स्म अहो ! इयं
साक्षात् सरस्वती पुंरूपेण सर्वेषाम् अस्माकं परि-
त्राणायागता नायं भवितुमर्हति मनुष्यः अद्यापि
किमपि केनापि न ज्ञायते ततः शीघ्रमेव गृहमा-
गत्य शकटेभ्यो भारमुत्तार्य्य प्रातः सर्वैरपि राज
भवनमागन्तव्यं नरेश्वराग्र एव निवेदयिष्यति ततः
झटिति गच्छाम इति योजयित्वा तथा चक्रुः
ततो राजसभां गत्वा राजानमालोक्य स्वस्तीत्युक्त्वा
निविष्टाः ततो बाणः प्राह देव ! सर्वज्ञेन यत्त्वया
पठ्यते तदीश्वर एव वेद केऽमी वराका उदरम्भरयः
द्विजाः तथाप्युच्यते तत्थम् अणु अणुसरइ ल्लौसै
मुहचन्दः सखुए दाये अणु इदिनक्क यदि कह अणु
किदितं स पडिपदी चन्दस्सतत्थणामन्वनुसरति
ल्लौसः मुखचन्द्रस्य खत्वे तस्याः अन्यिति वर्ण्यते
कथमनुकृतिस्तस्य प्रतिपदि चन्द्रस्य राजा यथा व्यव-
सितस्याभिप्रायं विदित्वा सर्वथा कालिदासः दिवस
प्राप्यस्थाने निवसति उपायैश्च सर्वं साध्यं ततो
बाणाय रूकमाणां पञ्चदशलक्षाणि प्रादात् सन्तोष-
विशेषेणैव विद्वद्वृन्दं स्वं स्वं सदनं प्रति प्रेषितं गते

च विद्वन्मण्डले शनैर्द्वारपालायादिष्टं राज्ञा यदि केचित् द्विजन्मान आयास्यन्ति तदा गृहमध्यमानेतव्याः ततः सर्वमपि वित्तमादाय स्वगृहं गते बाणे केचित् पण्डिता आहुः अहो! बाणेनानुचितं व्यवसायि यद्यसावपि अस्माभिः सह नगरान्निष्क्रान्तोऽपि सर्वमेव धनं गृहीतवान् सर्वथा भोजस्य बाणस्य रूपं ज्ञापयिष्यामः यथा कोऽपि नान्यत्र विश्वसेद्विद्वत्सु ततस्ते राजानमासाद्य ददृशुः राजा तान् प्राह, एतत् स्वरूपं ज्ञातमेव भवद्भिर्यथार्थतया वाच्यं ततस्तैः सर्वमेव निवेदितं ततः राजा विचारितवान् सर्वथा कालिदासस्यारण्यवेषेण मङ्गयान् मदीयनगरमध्यास्ते ततश्चाङ्गरक्षकानादिश्य अहो! इदानीं राजा देवपूजाव्यग्र इति मुमुक्षः पुनरिदानीं क्रीडोद्यानं गमिष्यतीति व्याकुलाः सर्वे भटाः सम्भूय पश्चाद्यान्ति ततो राजा तैर्विद्वद्भिः सह अश्वमारुह्य रात्रौ यत्र चारणप्रसङ्गः समजनि तत् प्रदेशं प्राप्तः ततो राजा चरतां चौराणां पदज्ञाननिपुणानाहूय प्राह अनेन वर्त्मना यः कोऽपि रात्रौ निर्गतः तस्य पदानि अद्यापि दृश्यन्ते तानि पश्यन्त्विति ततो राजा प्रतिपण्डितं लब्धं

दृत्वा तान् प्रेषयित्वा च स्वभवनमगात् ते च पदन्ना राजाज्ञयासर्वतश्चरन्तोऽपि तमनवेक्षमाणा विमूढा इवासन् ततश्च लम्बमाने सवितरि कामपि दासीमेकं पदत्राणं त्रुटितमादाय चर्मकारवेश्म गच्छन्तीं दृष्ट्वा तुष्टा इवासन् ततस्तत्पदत्राण तया चर्मकारकरे न्यस्तं वीक्ष्य तैश्च तस्याः करा न्निषेणादाय रेणुपूर्णे पथि मुक्तं तदेव पदं तस्येति ज्ञात्वा ताञ्च दासीं क्रमेण वेश्याभवनं विशन्तीं वीक्ष्य तस्या मन्दिरं परितो वेष्टयामासुः ततश्च तैः च णेण भोजश्रवणपथविषयम् अभिज्ञानवार्ता प्रापिता ततो राजा सपौरः सामात्यः पद्भ्यामेव विलासवती-भवनमगात् तवस्तच्छ्रुत्वा विलासवतीं प्राह कालि-दासः ! प्रिये मत्कृते किं कष्टं ते पश्य विलासवती सुकवे !

उपस्थिते विप्लव एव पुंसां समस्तभावः परिमीयते तथाऽवातवाद्यौनहितूलराशेर्गिरेश्च कश्चित्प्रतिमातिभेदः

मित्रस्वजनबन्धूनां बुद्धेर्वित्तस्य चात्मनः
आपन्निकषपाषाणो जनो जानाति सारताम्।
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनः
सुखानि च तथा मान्ये दैन्यमत्रातिरिच्यते॥

सुकवे ! राज्ञा त्वयि मनाङ्निराकृते वयसापि मया सहेदं दासीवृन्दं प्रदीप्तवह्नौ पतिष्यति कालिदास प्रिये ! नैवं मन्तव्यं मां दृष्ट्वा विकासीभूतास्यो भोजः पादयोः पतिष्यतीति ततो वेश्यागृहं प्रविश्य भोजः कालिदासं दृष्ट्वा ससम्भ्रममाश्लिष्य पादयो पतति स राजा पठति च ।

गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
माभून्मनः कदाचिन्मे त्वया विरहितं कवे !

कालिदासस्तच्छ्रुत्वा व्रीडावनताननस्तिष्ठति राजा च कालिदासमुखमुन्नमय्याह

कालिदास ! कलावास ! दासवत्पालितो यदि
राजमार्गे व्रजन्नत्र परेषां तत्र का त्रपा ॥

धन्यां विलासिनीं मन्ये कालिदासो यदेतया ।
निबद्धः स्वगुणैरेषः शकुन्त इव पञ्जरे ॥

राजा नेत्रयोः हर्षाश्रु मार्जयति कराभ्यां कालिदासस्य तत तत्प्राप्तिप्रसन्नो राजा ब्राह्मणेभ्यः प्रत्येकं लक्षं ददौ निजतुरगे च कालिदासमारोप्य सपरिवारः निजगृहं ययौ । कियत्यपि कालेऽविक्रान्ते राजा कदाचित् सन्ध्यामालोक्य प्राह ।

परिपतति पयोनिधौ पतङ्गः ।

ततो बाणः प्राह,

वरविकचकुहरेषु मत्तभृङ्गः उपवनतरुकोटरे विहङ्गः।

ततः कालिदासः प्राह,

युवतिजनेषु शनैः शनैरनङ्गः॥

तुष्टो राजा लक्षं लक्षं ददौ चतुर्थचरणस्य लक्षद्वयं ददौ कदाचिद्राजा बहिरुद्यानमध्ये मार्गे प्रत्यागच्छन्तं कमपि विप्रं ददर्श तस्य करे चर्ममयं कमण्डलुं वीक्ष्य तञ्चातिदरिद्रं ज्ञात्वा मुखश्रिया विराजमानं चावलोक्य तुरङ्गं तदग्रे निधायाह, विप्र! चर्मपात्रं किमर्थं पाणौ वहसीति स च विप्रः नूनं मुखशोभया तदुक्त्या च भोज इति विचार्याह देव! वदान्यशिरोमणौ भोजे पृथ्वीं शासति लोहताम्रभावः समजनि तेन चर्ममयं पात्रं वहामीति राजा भोजे शासति लोहताम्राभावे को हेतुः? तदा विप्रः पठति।

अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम्।

शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः॥

ततस्तुष्टो राजा प्रत्यक्षरं लक्षं ददौ कदाचिद्द्वारपालः प्राह धारेन्द्र! दूरदेशादागतः कश्चिद्विद्वान् द्वारि तिष्ठति तत्पत्नी च तत्पुत्रः सपत्नीकः अतः

धतिपवित्रं विद्वत्कुटुम्बं द्वारि तिष्ठतीति राजा महती गरीयसी शारदाप्रसादपद्धतिः । तस्मिन्नव सरे गजेन्द्रपाल आगत्य राजानं प्रणम्य प्राह, भोजेन्द्र ! सिंहलदेशाधीश्वरेण सपादशतं गजेन्द्राः प्रेषिताः षोड़शमहाप्रणयश्च ततो बाणः प्राह ।

स्थितिःकवीनामिवकुञ्जराणांस्वमन्दिरेवान्टपमन्दिरेवा टङ्केटङ्केकिंमशका इवैते भवन्तिभूपालविभूषिताङ्गा

ततो राजा गजावलोकनाय वहिरगात् ततस्तं विद्वत्कुटुम्बं वीक्ष्य चोलपण्डितो राज्ञः प्रियोऽह-मिति गर्वं दधार । यन्मया राजभवनमध्यं गम्यते विद्वत्कुटुम्बं तु द्वारपालस्थापितमपि वहिरास्ते तदा राजा तच्चेतसि गर्वं विदित्वा चोलपण्डितं सौधाङ्ग-णात् निःसारितवान् । काशीदेशवासी कोऽपि तण्डुलदेवनामा राज्ञे स्वस्तीत्युक्त्वातिष्ठत् राजा च तं प्रपच्छ सुमते ! कुत निवासः ?

वर्त्तते यत्र सा वाणी कृपाणीपरिकुशाखिनः।
श्रीमन्मालवभूपाल ! तत्र देशे वसाम्यहम् ॥

तुष्टो राजा तस्मै गजेन्द्रसप्तकं ददौ ततः कोऽपि विद्वानागत्यप्राह ।

तपसः सम्पदः प्राप्याधात्तपोऽपि न विद्यते ।

येन त्वं भोजकल्पद्रुः दृग्गोचरमुपैष्यसि ॥

तस्मै राजा दशगजेन्द्रान् ददौ ततः कश्चित् ब्राह्मणपुत्रः भूम्भारवं कुर्वाणोऽभ्येति ततः सर्वे सम्भ्रान्ताः कथं भूम्भारवं करोषीति राज्ञः स्वदृग्गोचरमानीतः पृष्टः स प्राह ।

देव ! त्वद्दानपाथोधौ दारिद्र्यस्य निमज्जतः ।
न कोऽपि हि कराऽवलम्बन्दत्ते मत्तेभदायकः ॥

ततस्तुष्टो राजा तस्मै विंशतृगजेन्द्रान् प्रादात् ततः प्रविशति पत्नीसहितः कोऽपि त्रिलोचनो विद्वान् स्वस्तीत्युक्त्वा प्राह ।

निजानपि गजान् भोजं ददानं प्रेक्ष्य पार्वती ।
गजेन्द्रवदनं पुत्रं रक्षत्यद्य पुनः पुनः ॥

ततो राजा सप्तगजान् तस्मै ददौ, ततो राजा विद्वत्कुटुम्बं तदैव पुरतः स्थितं वीक्ष्य ब्राह्मणं प्राह ।

क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ।

द्विजः प्राह ।

घटो जन्मस्थानं मृगपरिजनो भूर्जवसनम्
वने वासः कन्दादिकमशनमेवं विधगुणः ।
अगस्त्यः पाथोधिं यदकृतकराम्भोजकुहरे

क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे॥

ततो राजा बहुमूल्यानपि षोडशमणीन् तस्मै ददौ ततस्तत्पत्नीं प्राह राजा अम्ब! त्वमपि पठ।

देवी। रथस्यैकं चक्रं भुजगनमिताः सप्ततुरगा

निरालम्बो मार्गश्चरणविकलः सारथिरपि।

रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः

क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे।

राजा तुष्टः सप्तदशगजान् सप्तरथांश्च तस्मै ददौ। ततो विप्रपुत्रं प्राह राजा, विप्रसुत! त्वमपि पठ।

विप्रसुतः। विजेतव्या लङ्का चरणतरणीयो जलनिधि

र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः।

पदातिर्मर्त्योऽसौ सकलमवधीद्राक्षसकुलं

क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे॥

तुष्टो राजा विप्रसुताय अष्टादशगजेन्द्रान् प्रादात् ततः सुकुमारमनोज्ञनिखिलावयवालङ्कृतां शृङ्गाररसोपजातमूर्त्तिमिव चम्पकलतामिव लावण्यगात्रयष्टिं विप्रस्नुषां वीक्ष्य नूनं भारत्याः कापि लीलाकृतिरियमिति चेतसि नमस्कृत्य राजा प्राह, मात! त्वमप्याशयं वद। विप्रस्नुषा-देव! शृणु।

धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशाम्
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः।
स्वयं चैकोऽनङ्गः सकलभुवनं व्याकुलयति
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे॥

चमत्कृतो राजा लीलादेवीभूषणानि सर्वाण्यादाय तस्मै ददौ अनर्घ्यांश्च सुवर्णमौक्तिकवैडूर्यप्रवालांश्च प्रददौ ततः कदाचित् सीमन्तनामा कविः प्राह।

मध्याः संहर दीर्घतां त्यज निजं तेजः कठोरं रवेः!
श्रीमन् विन्ध्यगिरे! प्रसीद सदयं सद्यः समीपे भव।
इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं
श्रीमत् भोज! तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च॥

तस्मिन्नेव क्षणे कश्चित् सुवर्णकारः प्रान्तेषु पद्मरागमणिखचितं सुवर्णभाजनमादाय राज्ञः पुरो मुमोच ततो राजा सीमन्तकविं प्राह सुकवे! इदं भाजनं कामपि श्रियं दर्शयति ततः कविराह।

धारेश! त्वत्प्रतापेन पराभूतस्त्विषां पतिः।
सुवर्णपात्रव्याजेन देव त्वामेव सेवते॥

ततस्तुष्टो राजा तदेव पात्रं मुक्ताफलैरापूर्य प्रादात् कदाचिद्राजा मृगयारसेन पुरः पलायमानं

वराहं दृष्ट्वा स्वयमेकाकीतया दूरं वनान्तमासादितवान् तत्र कञ्चन द्विजवरमवलोक्य प्राह, द्विज! कुत्र गन्तासि? द्विजः धारानगरम्। भोजः किमर्थं? द्विजः भोजं द्रष्टुं द्रविणेच्छया सपण्डिताय दत्ते, अहमपि मूर्खं न याचे। भोजः विप्र! तर्हि। त्वं विद्वान् कविर्वा द्विजः महाभाग! कविरहं भोजः, तर्हि किमपि पठ द्विजः, भोजं विना मत्पदसरणिं न कोऽपि जानाति। राजा असाध्यमरवाणीपरिज्ञानमस्ति राजा च मयि खिद्यति त्वद्गुणञ्च श्रावयिष्यामि, किमपि कलाकौशलं दर्शय विप्रः, किं वर्णयामि? राजा कलमानेतान् वर्णय विप्रः।

कलमाः पाकविनम्राः मूलतलाघ्राणसुरभिकल्हाराः।
पवनाकम्पितशिरसप्राय: कुर्वन्ति परिमलश्लाघाम्॥

राजा तस्मै सर्वाभरणान् उत्तार्य्य ददौ ततः कदाचित् कुम्भकारबधूः राजगृहमेत्य द्वारपालं प्राह, द्वारपाल! राजा द्रष्टव्यः, स आह किं ते राज्ञा कार्य्यम्? सा चाह न तेऽभिधास्यामि। नृपाग्र एव कथयामि। स सभयामागत्य प्राह देव! कुम्भकारप्रिया काचिद्राज्ञो दर्शनाकाङ्क्षिणी न वक्ति-मत्पुरः कार्य्यं त्वत्पुरतः कथयिष्यति, राजा-प्रवेशय।

सा चागत्य नमस्कृत्य वक्ति देव ! मत्खननाहृतं निधानं वल्लभेन मे स पश्यन् एव तवाग्रे त्वां द्रष्टुं प्रापयितुमभ्यगां, राजा च चमत्कृतो निधानकलशमानयामास तद्द्वारमुद्घाट्य यावत् पश्यति राजा तावत्तदन्तर्वर्त्ति द्रव्यं मणिप्रभामण्डलमालोक्य कुम्भकारं पृच्छति किमेतत् ? कुम्भकार ! स चाह ।

राजचन्द्रं समालोक्य त्वां तु भूतलमागतम् ।
रत्नश्रेणिर्निधानान्ये नचत्राण्यभ्युपागमत् ॥

राजा कुम्भकारमुखात् श्लोकं लोकोत्तरमाकर्ण्य चमत्कृतः तस्मै सर्वं ददौ ततः कदाचिद्राजा रात्रावेकाकी सर्वतो नगरचेष्टितं पश्यन् पौरगिरमाकर्णयन् चचार तदा कश्चिद्वैश्यगृहे वैश्यः स्वप्रियां प्राह प्रिये ! राजा स्वल्पदानरतोऽपि उज्जयिनीनगराधिपतेर्विक्रमार्कस्य दानप्रतिष्ठां काङ्क्षते सा किं भोजेन प्राप्यते ? कैश्चिल्लोकपरायणैर्मयूरादिकविभिर्महिमानं प्रापितो भोजः-परन्तु भोजो भोज एव । प्रिये ! शृणु ।

आबद्धकृत्रिमसटाजटिलांसभित्ति-
रारोपितो यदि पदं मृगवैरिणः स्यात् ।
मत्तेभकुम्भतटपाटनलम्पटस्य

नाहं करिष्यति कथं हरिणाधिपस्य ?

राजा श्रुत्वा विचारितवान् असौ सत्यमेव वदति ततः पुनः पुनर्वदन्तं शृणोति ॥

आपन्न एव याचं देहीत्युच्चारणं न वै दुष्यं
उपपन्नमेव देयं त्यागस्ते विक्रमार्क ! किमु वर्ण्यः ।
विक्रमार्क ! त्वया दत्तं श्रीमन् ग्रामशताष्टकं
अर्थिने द्विजपुत्राय भोजे त्वन्महिमा कुतः ॥
प्राप्नोति कुम्भकारोऽपि महिमानं प्रजापतेः ।
यदि भोजोऽप्यवाप्नोति प्रतिष्ठां तव विक्रम !

राजा-लोके सर्वोऽपि जनः स्वगृहे निःशङ्कं सत्यं वदति मया वा अन्येन वा सर्वथा विक्रमार्कप्रतिष्ठा न शक्या प्राप्तुं ततः कदाचित् कश्चित् कविः राजद्वारं समागत्याह राजा द्रष्टव्य इति। ततः प्रवेशितो राजानं स्वस्तीत्युक्त्वा तदाज्ञयोपविष्टः पठति ।

कविषुवादिषुभोगिषुदेहिषु द्रविणवत्सु सतामुपकारिषु
धनिषुधन्विषुधर्मधनेष्वपिचितितलेनहिभोजसमोन्नदः

राजा तस्मै लक्षं प्रादात् ततः कदाचिद्राजा क्रीड़ोद्यानं प्रस्थितो मध्ये मार्गं कामपि मलिनांशुवसनां तीक्ष्णकरतपनकरविदग्धमुखारविन्दां सुलोचनां लोचनाभ्याम् आलोक्य पप्रच्छ का त्वं पुत्रि ?

सा च तं श्रीभोजभूपालं मुखश्रिया विदित्वा तुष्टा प्राह, नरेन्द्र! लुब्धकवधूः। हर्षसम्भृतो राजा तस्याः पटप्रबन्धानुबन्धेनाह हस्ते किमेतत्? सा चाह फलं राजाह चाम्रं किं? सा चाह।

सहजं ब्रवीमि नृपते! यद्यादरात् श्रूयते।
गायन्ति त्वदरिप्रियाश्रुतटिनीतीरेषु सिद्धाङ्गना।
गीतं गानदृशं चरन्ति हरिणास्तेनामिषं दुर्लभम्॥

राजा तस्यै प्रत्यक्षरं लक्षं प्रादात् सर्वाभरणान्युत्तार्य तस्य तुरगं ददौ ततो गृहमागत्य गवाक्षे उपविष्टः तत्र चासीनं भोजं दृष्ट्वा राजवर्त्मनि स्थित्वा कश्चिदाह देव! सकलमहीपाल! आकर्णय!

दूतस्तेतस्ताङ्घ्रिर्विघटिततटः सेतुरुदरे
धरित्री दुर्लङ्घ्या बहलहिमपङ्को गिरिरयम्।
इदानीं निर्वृत्ते करितुरगनीराजनविधौ
न जाते यातारस्तव च रिपवः केन च पथा॥

तुष्टो भोजः वर्त्मनि स्थितस्यैव तस्य वंश्यान् पञ्च गजान् ददौ कदाचिद्राजा मृगयारसपराधीनो हयमारुह्य प्रतस्थे।

ततो नन्दीं समुत्तीर्णं शिरस्यारोपितेन्धनम्॥
वेषेण ब्राह्मणं ज्ञात्वा राजा पप्रच्छ सत्वरम्॥

कियन्मात्रं जलं विप्र !- स प्राह ।
जानुदघ्नं नराधिप !
चमत्कृतो राजाह । ईदृशी किमवस्था ते ?
स आह,-न हि सर्वे भवादृशाः ।

राजा प्राह कुतूहलात् विद्वन् ! याचस्व कोशाधिकारिणं लक्षं दास्यति मद्वचसा ततो विद्वान् काष्ठं भूमौ निक्षिप्य कोशाधिकारिणं गत्वा प्राह महाराजेन प्रेषितोऽहं लक्षं मे दीयताम् ।

ततः स हसन् आह विप्र ! भवन्मूर्त्तिः लक्षं नार्हति ततो विषादी स राजानमेत्याह स पुनर्हसति देव ! नार्पयति राजा कुतूहलादाह लक्षद्वयं प्रार्थय दास्यति पुनरागत्य विप्रः लक्षद्वयं देयमिति राज्ञोक्तमित्याह पुनर्हसति पुनरपि भोजं प्राप्याह स पापिष्ठो मां हसति नार्पयति ततः कौतूहली लीलानिधिर्मही प्रासन् श्रीभोजराजः प्राह विप्र ! लक्षत्रयं याचस्व अवश्यं स दास्यति । पुनरेत्य प्राह राजा मे लक्षत्रयं दापयति स पुनर्हसति ततः क्रुद्धो विप्रः पुनरेत्याह देव ! स नार्पयत्येव ।

राजन् ! कनकधाराभिस्त्वयि सर्वत्र वर्षति
अभाग्यछत्रसंछन्ने मयि नायान्ति बिन्दवः ।

त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः।
अस्माकमर्कवृक्षाणां पूर्वदलेषु संशयः॥

एकमस्य परमेकमुद्यमं निष्फलत्वमपरस्य वस्तुनः।
नित्यमुष्णमहसा शिरस्य ते नित्यमन्धतमसं प्रधावति

ततो राजा प्राह।

क्रोधं माकुरु मद्वाक्यात्कृत्वा कोशाधिकारिणम्।
लक्षत्रयं गजेन्द्राश्च दश ग्राह्या त्वया द्विज॥

ततस्ताङ्करचकं प्रेषयति ततः कोशाधिकारी धर्मपत्रे लिखति।

लक्षं लक्षं पुनर्लक्षं मत्ताश्च दशदन्तिनः।
दत्ता भोजेन तुष्टेन जानुदघ्नप्रभाषणात्॥

ततः सिंहासनमलङ्कुर्वाणे श्रीभोजनृपतौ द्वार-आगत्य प्राह राजन्। कोऽपि शुकदेवनामा पात्र कविः दारिद्र्यविडम्बितो द्वारि वर्त्तते राजाबाणं प्राह पण्डितवर! शुकवेः तत्त्वं विजानासि बाणः- देव! शुकदेवपरिज्ञानसामर्थ्याभिज्ञः कालिदास एव नान्यः राजा सुकवे! सखे कालिदास! किं विजानासि शुकदेवकविं प्राह कालिदास-देव!

सुकविद्वितयं जाने निखिलेऽपि महीतले।
भवभूतिः शुकश्चायं वाल्मीकिस्त्रितयो नयः॥

ततो विद्वद्वृन्दवन्दिता सीता प्राह ।

का काः किं किं न कुर्वन्ति क्रोङ्कारं यत्र यत्र वा ।
शुक एव परं वक्ति नृपहस्तोपलालितः ।

ततो मयूरः प्राह,

अपृष्टस्तु नरः किञ्चित् यो ब्रूते राजसंसदि ।
नकेवलमसन्मानं लभते च विडम्बनाम् ॥

देव ! तथाप्युच्यते ।

का सभा ? किं कविज्ञानं ? रसिकाः कवयश्च के ?
भोज ! किं नाम ते दानं शुकस्तुष्यति येन सः ॥

तथापि भवनद्वारमागतं शुकदेवं सभायामानेतव्यमेव तदा राजा विचारयति शुकदेवसामर्थ्यं श्रुत्वा हर्षविषादः पात्रमासीत् महाकविरवलोकित इति हर्षः अस्मै सत् कविकोटिमुकुटमणये किं नाम देयमिति च विषादः भवतु द्वारपाल ! प्रवेशय । तत आयान्तं शुकदेवं दृष्ट्वा राजा सिंहासनादुदतिष्ठत् सर्वे पण्डितास्तं शुकदेवं प्रणम्य सविनयमुपवेशयन्ति । स च राजा तं सिंहासने उपवेश्य स्वयं तदाज्ञयोपविष्टः । ततः शुकदेवः प्राह देव धारानाथ ! श्री विक्रमनरेन्द्रस्य या दानलक्ष्मीः त्वामेव सेवते देव ! मालवेन्द्र एव धन्योनान्ये

भूभुजः यस्य ते कालिदासादयो महाकवयः सूत्र-बद्धाः पक्षिण इव निवसन्ति ततः पठति ।

प्रतापभीत्या भोजस्य तपनो मित्रतामगात् ।
औवी वाड़वतां धत्ते तड़ित् चणिकतां गता ॥

राजा तिष्ठ सुकवे ! नापरः श्लोकः पठनीयः ।

सुवर्णकलशं प्रादात् दिव्यमाणिक्यसम्भृतम् ।
भोजः शुकाय सन्तुष्टो दन्तिनश्च चतुःशतम् ॥

इति पुण्यपत्रे लिखित्वा सर्वं दत्त्वा कोशाधिकारी शुकं प्रस्थापयामास राजा स्वदेशं प्रति गतं शुकं ज्ञात्वा तुतोष सा च परिषत् सन्तुष्टा । अन्यदा वर्षाकाले वासुदेवो नाम कविः कश्चिदागत्य राजानं दृष्टवान् राजा सुकवे ! पर्जन्यं पठ, ततः कविराह ।

नो चिन्तामणिभिर्न कल्पतरुभिर्नो कामधेन्वादिभिर्नो देवैश्च परोपकारनिरतैः स्थूलैर्न सूक्ष्मैरपि ।
अम्भोदेन निरन्तरं जलभरैस्तामुर्वरां सिञ्चता
धौरेयेण धुरं त्वयाद्य वहतामन्ये जगज्जीवति ॥

राजा लक्षं ददौ कदाचिद्राजानं निरन्तरं दीयमानमालोक्य मुख्यामात्यो वक्तुमशक्तो राज्ञः शयनभवनभित्तौ व्यक्तान्यक्षराणि लिखितवान् ।

आपदर्थं धनं रक्षेत् ।

राजा शयनादुत्थितो गच्छन् भित्तौ तान्यक्षराणि वीक्ष्य स्वयं द्वितीय चरणं लिलेख। श्रीमतामापदः कुतः ?

अपरेद्युः अमात्यो द्वितीयं लिखितं दृष्ट्वा स्वयं तृतीयं लिलेख। सा चेदपगतालक्ष्मीः।

परेद्युः राजा चतुर्थं लिखति। सञ्चितार्थो विनश्यति।

ततः मुख्यामात्यः राज्ञः पादयोः पतति। देव! क्षन्तव्योऽयं ममापराधः अन्यदा धाराधीश्वरमुपरिसौधभूमौ शयानं मत्वा कश्चिद्द्विजचौरः खातपातपूर्वं राज्ञः कोशगृहं प्रविश्य बहूनि विविधरत्नानि वैदूर्य्यादीनि हृत्वा तानि तानि परलोकचरणानि मत्वा तत्रैव वैराग्यमापन्नो विचारयामास।

यद्वरङ्गाः कुष्ठिनश्चान्धाः पङ्गवश्च दरिद्रिणः।
पूर्वोपार्जितपापस्य फलमश्नन्ति देहिनः॥

ततो राजा निद्राचये दिव्यशयनस्थितो विविधमणिकङ्कणालङ्कृतं दयितवर्गं दर्शनीयमालोक्य गजतुरगरथपदातिसामग्रीं च चिन्तयन् राज्यसुखसन्तुष्टः प्रमोदभरादाह।

चेतोहरा युवतयः सुहृदोऽनुकूलाः।
सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः

मत्तानि दन्तिनिवहाश्चलरलास्तुरङ्गाः ॥

इति चरणत्रयं राज्ञोक्तं चतुर्थचरणं राज्ञो मुखान्न निःसरति स तदाधारेण श्रुत्वा पूरितम् ।

संमीलने नयनयोर्नहि किञ्चिदस्ति ।

ततः ग्रथितो ग्रन्थः, राजा चौरं वीक्ष्य तस्मै वीरवलयमदात्, ततस्तस्करो वीरवलयमादाय ब्राह्मणगृहं गत्वा शयानं ब्राह्मणमुत्थाप्य तस्मै दत्त्वा प्राह विप्र ! एतद्राज्ञः पाणिवलयं बहु-मूल्यं अल्पमूल्येन न विक्रेयं ततो ब्राह्मणः पण्यवीथ्यां तद्विक्रीय दिव्यभूषणानि पट्टदुकूलानि च जग्राह ततो राजकीयाः केचन एनं चौरं मन्यमानाः राज्ञो निवेदयन्ति ततो राजनिकटे नीतः राजा पृच्छति, विप्र ! धार्य्यं पटमपि नास्ति अद्य प्रातरेव दिव्यकुण्डलाभरणपट्टदुकूलानि कुतः ? विप्रः प्राह ।

भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः पाठीनैः पृथुपङ्कपीठलुठनाद्यस्मिन् मुहुर्मूर्च्छितम् ।
तस्मिन् शुष्कसरस्यकालजलदेनागत्य तच्चेष्टितं यत्राकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥

तुष्टो राजा तस्मै वीरवलयं चोरप्रदत्तं निश्चित्य स्वयमुलक्षं ददौ अन्यदा कोऽपि कवीश्वरः विष्णाख्यः

राजद्वारि समागत्य तैः प्रवेशितो राजानं दृष्ट्वा स्वस्तिपूर्वकं प्राह ।

धाराधीशधरा महेन्द्रगणना कौतूहलीयानयं
वेधास्त्वद्गणनाश्चकार घटिकाखण्डेन रेखां दिवि ।
सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमीधरा
भावात्तु त्यजतिस्म सोऽयमवनीपीठे तुषाराचलः ॥

राजा लोकोत्तरं श्लोकमाकर्ण्य किं देयमिति व्यचिन्तयत् तस्मिन् क्षणे तदीयकवित्वमप्रतिद्वन्द्वमाकर्ण्य सोमनाथाख्यकवेर्मुखं विच्छायमभवत् ततः स दौष्ट्यात् राजानं प्राह, देवासौ सुकविर्भवति परमनेन कदापि वीक्षितास्ति राजसभा यतो दारिद्र्यावारिधिरयम् अस्य च जीर्णमपि कौपिनं नास्ति ततो राजा सोमनाथं प्राह,

निरवद्यानि पद्यानि यद्यनाथस्य का क्षतिः ?
भिक्षुणा कक्षनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥

ततः सर्वेभ्यः ताम्बूलं दत्त्वा राजा सभाया उदतिष्ठत् ततः सर्वैरप्यन्योऽन्यमित्यभिधायि, यद्य विष्णुकवेः कवित्वमाकर्ण्य सोमनाथेन सम्यग्दौष्ट्यमकारि ततः समुत्थिता विद्वत्परिषत् ! ततो विष्णुकविरेकं पद्यं पत्रे लिखित्वा सोमनाथकविहस्ते

दत्वा प्रणम्य गन्तुमारभत् अत्र सभायां त्वमेव चिरं नन्द ततो वाचयति सोमनाथकविः ।

एतेषु हा ! तरुणमारुतधूयमान
दावानलैः कवलितेषु महीरुहेषु ।
अम्भो नचेत् जलद ! मुञ्चसि मा विमुञ्च
वज्रं पुनः क्षिपसि निर्दय ! कस्य हेतोः ? ॥

ततः सोमनाथकविः निखिलमपि पट्टदुकूलवित्तहिरण्यमपि तुरङ्गमादिसम्पत्तिं कलत्रवस्त्रावशेषं दत्तवान् ततो राजा मृगयारसप्रवृत्तो गच्छन् तं विप्रुकविमालोक्य व्यचिन्तयत् मया अस्मै भोजनमपि न प्रदत्तं मामनादृत्य अयं सम्पत्तिपूर्णः स्वदेशं प्रति यास्यति पृच्छामि, विप्रकवे ! कुतः सम्पत्तिः प्राप्तः? कविराह सोमनाथेन राजेन्द्रदेव । त्वदृष्टहभिक्षुणा अद्य शोच्यतमे पूर्णं मयि कल्पद्रुमायितं राजा पूर्वं सभायां श्रुतस्य श्लोकस्य अक्षरलक्षं ददौ सोमनाथेन च यावद्दत्तं तावदपि सोमनाथाय दत्तवान् सोमनाथः प्राह,

किसलयानि कुतः कुसुमानि वा
क्व च फलानि तथा वनवीरुधाम् ।
अयमकारणकारुणिकोयदा-

नतरतीह पयांसि पयोधरः॥

ततः विष्णुकविः सोमनाथदत्तेन च तुष्टवान्, तदा सोमनाथकविः प्राह॥

वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्य्यते।
तमपि कुरुते क्रोड़ाधीनं पयोनिधिरादरात्
अह ह? महतां निःसीमानश्चरित्रविभूतयः॥

कदाचित् सौधतले राजानमेत्य भृत्यः प्राह, देव! अखिलेष्वपि कोशेषु यद्वित्तजातमस्ति तत्सर्वं देवेन कविभ्यो दत्तं, परन्तु कोशगृहे धनलेशोऽपि नास्ति कोऽपि कविः प्रत्यहं द्वारि तिष्ठति। इतःपरं कविर्विद्वान् वा कोऽपि राज्ञा न प्राप्यत, इति मुख्यामात्येन देवसन्निधौ विज्ञापनीयमित्युक्तं, राजा कोशस्थं सर्वं दत्तमिति जानन्नपि प्राह, अद्य द्वारस्थं कविं प्रवेशय ततो विद्वानागत्य स्वस्तीति वदन् प्राह।

नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखविसृष्टोत्तानचञ्चूपुटेन।
जलधर! जलधरा दूरतस्तावदास्तां
ध्वनिरपि मधुरस्ते न श्रुता चातकेन॥

राजा तदाकर्ण्य धिग् जीवितं यद्विद्वांसः कवयश्च

द्वारमागत्य सीदन्तीति तस्मै विप्राय सर्वाण्याभरणा-न्युत्तार्य्य ददौ, ततो राजा कोशाधिकारिणमाहूय आह, भाण्डारिक ! मुञ्जराजस्य तथा मे पूर्वेषाञ्च ये कोशाः सन्ति तेषां मध्ये रत्नपूर्णाः कलशाः कुत्र? ततः काश्मीरदेशान्मुचुकुन्दकविरागत्य स्वस्तीत्युक्त्वा प्राह ।

त्वद्यशो जलधौ भोज ! निमज्जनभयादिव ।
सूर्य्येन्दुबिम्बमिषतो धत्ते कुम्भद्वयं नभः ॥

राजा तस्मै प्रत्यक्षरं लक्षं ददौ पुनः कविराह ।

आसन् चणानि यावन्ति चातकाश्रूणि तेऽम्बुदे ।
तावन्तोऽपि त्वयोदारं न मुक्ता जलविन्दवः ॥

ततः राजा तस्मै शततुरगानपि ददौ, ततः भाण्डारिको लिखति ।

मुचुकुन्दाय कवये जात्यानश्वान् शतं ददौ ।
भोजः प्रदत्तलक्षोऽपि तेनासौ याचितः पुनः ॥

ततो राजा सर्वानपि वेश्म प्रेषयित्वान्तर्गच्छति। ततो राज्ञश्चामरग्राहिणी प्राह ।

राजन् ! मुञ्जकुलप्रदीप ! सकलक्ष्मापाल ! चूड़ामणे
युक्तं सञ्चरणं तवाद्भुतमणिच्छत्रेण रात्रावपि ।
मा भूत्त्वद्वदनावलोकनवशात् व्रीड़ाभिनम्रः शशी

माभूत्त्वेयमरुन्धती भगवती दुःशीलताभाजनम् ॥

राजा तस्मै प्रत्यक्षरं लक्षं ददौ अन्यदा कुण्डिन नगराद्गोपालो नाम कविरागत्य स्वस्तिपूर्वकं प्राह ।

त्वच्चित्ते भोज ! निर्यातं द्वयं तृणकणायते ।
क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥

राजा श्रुत्वापि तुष्टो न दास्यति राजपुरुषैः सह चर्चां कुर्वाणस्तिष्ठति, ततः कविः व्यचिन्तयत्, किमु राज्ञा नाश्रावि ? । ततः क्षणेन समुन्नतसेवावलोक्य राजानं कविराह ।

हे पाथोद ! यथोन्नतं हिमवता दिग्व्याप्तासर्वतो मन्येधीर ! तथा करिष्यसि खलु क्षीराब्धितुल्यं सरः ।
किंत्वेष क्षमते न हि क्षणमपि ग्रीष्मोष्मणा व्याकुलः पाठीनादिगणस्त्वदेकशरण स्तद्वर्ष तावत् कियत् ॥

राजा कविहृदयं विज्ञाय गोपालकवे ! दारिद्र्याग्निना नितान्तं दग्धोऽसीति वदन् षोड़शमणीननर्घान् षोड़शदन्तीन्द्रांश्च ददौ एकदा राजा धारानगरे विचरन् क्वचिच्छिवालये प्रसुप्तं पुरुषद्वय मपश्यत् तयोरेको विगतनिद्रोवक्ति अहो ! ममास्तराणन्न एव कस्त्वम् ? प्रसुप्तोऽसि जागर्षि नो वा ? ततस्तपर आह,विप्र ! प्रणतोऽस्मि अहमपि ब्राह्मणः

पुत्रः त्वामत्र प्रथमरात्रौ शयानं वीक्ष्य प्रदीप्ते च प्रदीपे कमण्डलूपवीतादिभिर्ब्राह्मणं ज्ञात्वा भवदासन्न एवाहं प्रसुप्तः। इदानीं त्वद्गिरमाकर्ण्य प्रबुद्धोऽस्मि प्रथमः प्राह, वत्स! यदि त्वं प्रबुद्धोऽसि ततो दीर्घायुर्भव वद कुत आगम्यते? किं ते नाम? अत्र च किं कार्य्यं? द्वितीयः प्राह विप्र! भास्कर इति नाम पश्चिमसमुद्रतीरे प्रभासतीर्थसमीपे वसति र्मम तत्र भोजस्य वितरणं बहुभिः व्यावर्णितं ततो याचितुमहमागतः। त्वं मम वृद्धत्वात् पितृकल्पोऽसि, त्वमपि सुपरिचयं वद। स प्राह, वत्स! शाकल्य इति मे नाम, मया एकशिला नगर्य्या आगम्यते भोजं प्रति द्रविणाशया। वत्स! त्वयानुक्तमपि दुःखं त्वयि ज्ञायते कीदृशं तद्वद, ततो भास्करः प्राह, तात। किं ब्रवीमि दुःखम्।

क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवा लिप्ता झर्झरघर्घरी जतुलवैर्नो मां तथा बाधते।
गेहिन्या स्फुटितांशुकं घटयितुं कृत्वा सकाकुस्मितं कुप्यन्ती प्रतिवेश्मलोकगृहिणीं सूचिं यथा याचिता॥

राजा श्रुत्वा सर्व्वाभरणान्युत्तार्य्य तस्मै दत्त्वा प्राह, भास्कर! सीदन्त्यतीव ते बालाः झटिति

देहि यादि, ततः शाकल्यः प्राह ।

अत्युद्धृता वसुमती दलितोऽरिवर्गः
क्रोडीकृता बलवता बलिराजलक्ष्मीः ।
एकत्र जन्मनि कृतं यदनेन यूना
जन्मत्रये तदकरोत्पुरुषः पुराणः ॥

ततो राजा शाकल्याय लक्षत्रयं दत्तवान् ।

अन्यदा राजा मृगयारसेन विचरन् तत्र पुरः समागतहरिण्यां बाणेन विद्धायामपि विद्धाश्रया कोऽपि कविराह ।

श्रीभोजे मृगयां गतेऽपि सहसा चापे समारोपिते
ऽप्याकर्णान्तगतेऽपि मुष्टिगलिते बाणेऽङ्गलग्नेऽपि च ।
स्थानान्नैव पलायितं न चलितं नोत्कम्पितं नोत्प्लुतम्
मृग्यामद्वशगं करोति दयितं कामोऽयमित्याशया ॥

राजा तस्मै लक्षत्रयं प्रयच्छति ।

अन्यदा सिंहासनमलङ्कुर्वाणे श्रीभोजनृपतौ, द्वारपाल आगत्य आह देव! गङ्गातीरवासिनी काचन वृद्धब्राह्मणी विदुषी द्वारि तिष्ठति, राजा प्रवेशय, तत आगच्छन्तीं राजा प्रणमति । सा तं चिरञ्जीवेत्युक्त्वाह ।

भोजप्रतापाग्निरपूर्व एष जागर्ति भूभृत्कटकस्थलीषु ।

यस्मिन्प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु ॥

राजा तस्मै रत्नपूर्णं कलशं प्रयच्छति, ततो लिखति भाण्डारिकः ।

भोजेन कलशो दत्तः सुवर्णमणिसंभृतः ।
प्रतापस्तुतितुष्टेन द्राद्राये राजसंसदि ॥

अन्यदा दूरदेशादागतः कश्चिच्चोरो राजानं प्राह, देव ! सिंहलदेशे मया काचन चामुण्डालये राजकन्या दृष्टा, सा च मां दृष्ट्वा मालवदेशदेवस्य महिमानं बहुधा स्तुतं, त्वमपि वदेति पप्रच्छ, मया च तस्या देवगुणा व्यावर्णिताः सा चात्यन्ततोषाच्चन्दनतरोर्निरुपमं गर्भखण्डं दत्त्वा यथास्थानं प्रपेदे देवगुणाभिवर्णनप्राप्तं तदेतद्गृहाण एतत् प्रसृतपरिमलभरेण भृङ्गा भुजगाश्च समायान्ति राजा तद्गृहीत्वा तुष्टस्तस्मै लक्षं दत्तवान्, ततो दामोदरकविस्तन्निषेण राजानं स्तौति ।

श्रीमच्चन्दनवृक्ष ! सन्ति बहवस्ते शाखिनः कानने
येषां सौरभमात्रकं निवसति प्रायेण पुष्पश्रिया ।
प्रत्यङ्गं सुकृतेन तेन शुचिनाख्यातः प्रसिद्धात्मना
यो सौगन्ध्यगुणस्त्वया प्रकटितः क्वासाविह प्रेक्ष्यते ॥

राजा स्वस्तुतिं बुध्वा लक्षं ददौ ततो द्वारपाल

आगत्य प्राह, देव! काचित् सूत्रधारस्त्री द्वारि वर्त्तते राजा प्रवेशय ततः सा गत्य राजानं प्रणिपत्याह।

बलिः पातालनिलयोऽधः कृतश्चित्रमत्र किम्?
अधःकृतो दिवस्थोऽपि चित्रं कल्पद्रुमस्त्वया॥

राजा तस्यै प्रत्यक्षरं लक्षं ददौ ततः कदाचित् मृगयापरिश्रान्तः राजा कश्चित् सहकारतरो रधस्तात्तिष्ठतिस्म तत्र मल्लिनाथाख्य कविरागत्य प्राह।

शाखाः शतशतविततास्सन्ति कियन्तो न कानने तरवः।
परिमलभरमिलदलिकुलदलितदलाः शाखिनो विरलाः॥

ततो राजा तस्मै हस्तवलयं ददौ। तत्रैव आसीने राज्ञि कोऽपि विद्वानागत्य स्वस्तीत्युक्त्वा प्राह, राजन्! काशीदेशमारभ्य तीर्थयात्रया परिभ्राम्यते काशीदेशवासिना मया। राजा- भवादृशानां तीर्थवासिनां दर्शनात् कृतार्थोऽस्मि। स आह वयं मान्त्रिकाश्च राजा-विप्रेषु सर्वं सम्भाव्यते; राजा-पुनः प्राह, विप्र! मन्त्रविद्यया यथा परलोके फलप्राप्तिः तथा किमिह लोकेऽप्यस्ति? विप्रः-राजन्! सरस्वतीचरणाराधनाद्विद्यावाप्तिर्विश्वविदिता, परं धनावाप्तिर्भाग्याधीना।

गुणाः खलु गुणा एव न गुणा भूतिहेतवः ।
धनसञ्चयकर्त्तॄणि भाग्यानि पृथगेव हि ॥

देव ! विद्यागुणा एव लोकानां प्रतिष्ठायै भवन्ति न तु केवलं सम्पदः । देव !

आत्मायत्ते गुणग्रामे नैर्गुण्यं वचनीयता ।
दैवायत्तेषु वित्तेषु पुंसां का नाम वाच्यता ॥

देव ! मन्त्राराधनेनाप्रतिहता शक्तिः स्यात् देव ! एवं कुतूहलं मया यस्य शिरसि करो निधीयते स सरस्वतीप्रसादेन अस्खलितविद्याप्रसारः स्यात्, राजा प्राह सुमते ! महती देवताशक्तिः ततो राजा कामपि दासी माकार्य्य विप्रं प्राह द्विजवर अस्या वेश्यायाः शिरसि करन्निधेहि विप्रस्तस्याः शिरसि करं निधाय तां प्राह देवि ! यद्राजाज्ञापयति तद्वद ततो दासी प्राह, देव ! अहमद्यसमस्तवाङ्मयजातं हस्तामलकवत्पश्यामि देव ! आदिश किं वर्णयामि ? ततो राजा पुरः खड्गं वीक्ष्य प्राह खड्गं मे व्यावर्णयेति । दासी प्राह ।

धाराधर ! त्वदसिरेष नरेन्द्र ! चित्रं
वर्षन्ति वैरिवनिताजनलोचनानि ॥
कोशेन सन्ततमसङ्गतिराहवेऽस्य ।

दारिद्र्यमभ्युदयति प्रति पार्थिवानाम् ॥

राजा तस्मै रत्नकलशानानर्घ्यान् पञ्च ददौ । तत-स्तस्मिन् क्षणे कुतश्चित् पञ्च कवयः समाजग्मुः । तानवलोक्य ईषद्विच्छायमुखं राजानं दृष्ट्वा महेश्वर-कविः वृक्षमिषेणाह । किं जातोऽसि चतुष्पथे ? घनतरच्छायोऽसि किं छायया ? छन्नश्चेत् फलितो-ऽसि किं फलभरैः ? पूर्णोऽसि किं सन्नतः ?

हे सद्वृक्ष ! सहस्व सम्प्रति चिरं शाखा शिखा-कर्षण-क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः

ततो राजा तस्मै लक्षं ददौ ततस्ते द्विजवराः पृथगाशीर्वचनमुदीर्य्य यथाक्रमं राजाज्ञया कम्बल उपविश्य मङ्गलं चक्रुः । ततः एकः पठति ।

कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्ता-मादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः । दिङ्मातङ्गा मृणालीकवलनकलतां कुर्वतां पर्वतेन्द्राः सर्वे स्वैरंचरन्तु त्वयि वहति विभो ! भोज देवीं धरित्रीम् ।

राजा चमत्कृतः तस्मै शताश्वान् ददौ ततो भाण्डारिको लिखति ।

क्रीडोद्याने नरेन्द्रेण शतमश्वा मनोजवाः ।
प्रदत्ताः कामदेवाय सहकारतरोरधः ॥

ततः कदाचिद्भोजो विचारयति स्म, मत्सदृशो वदान्यः कोऽपि नास्तीति, तदेवं विदित्वा मुख्यामात्यो विक्रमार्कस्य पुण्यपत्रं भोजाय प्रदर्शयामास भोजस्तत्र पत्रे किञ्चित् प्रस्तावमपश्यत्। तथाहि विक्रमार्कः पिपासया प्राह।

स्वच्छं सज्जनचित्तवल्लघुतरं दीनार्त्तिवच्छीतलं
पुत्रालिङ्गनवत्तथैव मधुरं तद्बाल्यसञ्जल्पवत्।
एलाशोरलवङ्गचन्दनलसत् कर्पूरकस्तूरिका-
जातीपाटलिकेतकैः सुरभितं पानीयमानीयताम्॥

ततो मागधः प्राह,

वक्त्राम्भोजे सरस्वत्यभिवसति सदाशोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः।
वाहिन्यः पार्श्वमेताः कथमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छे चित्ते कुतोऽभूत् कथय नरपते! तेऽम्बुपानाभिलाषः?॥

ततो विक्रमार्कः प्राह, तथाहि।

अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः
पञ्चाशन्मधुगन्धमत्तमधुपाः क्रोधोद्धताः सिन्धुराः।
अश्वानामयुतं प्रपञ्चचतुरं वाराङ्गनानां शतं
दत्तं पाण्ड्यनृपेण यौतुकमिदं वैतालिकायार्प्यताम्॥

ततो भोजः प्रथमत एव अद्भुतं विक्रमार्कचरित्रं

दृष्ट्वा निजगर्वं तत्याज, ततः कदाचिद्धारानगरे रात्रौ विचरन् राजा केचन देवालये शीतालुं ब्राह्मण-मित्थं पठन्तमवलोक्य स्थितः।

शीतेनाध्युषितस्य माघजलवच्चिन्तार्णवे मज्जतः
शान्ताग्नेः स्फुटिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरङ्गता
सत्पात्रप्रतिपादितेव कमला नो हीयते शर्वरी॥

इति श्रुत्वा राजा प्रातःतमाहूय पप्रच्छ विप्र! पूर्वेद्युः रात्रौ त्वया दारुणः शीतभारः कथं सोढः?विप्र प्राह।

रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः।
एवं शतोमया नीतं जानु भानु कृशानुभिः॥

राजा तस्मै सुवर्णकलशत्रयं प्रादात्, ततः कविः राजानं स्तौति।

धारयित्वा त्वयात्मानं महात्यागधनाधुना।
मोचिता बलिकर्णाद्याः स्वयशो गुप्तकर्मणः॥

राजा तस्मै लक्षं ददौ एकदा क्रीडोद्यानपालः आगत्य एकमिक्षुदण्डं राज्ञः पुरो मुमोच तं राजा करे गृहीतवान्, ततो मयूरकविः नितान्तपरिचय-वशात् आत्मनि राज्ञा कृतामवज्ञां मनसि निधाय इक्षुमिषेणाह।

कान्तोऽसि नित्यमधुरोऽसि रसाकुलोऽसि
किञ्चासि पञ्चशरकार्मुकमद्वितीयम् ।
इक्षो तवास्ति सकलं परमेकमूनं
यत्सेवितो भजसि नीरसतां क्रमेण ॥

राजा कविहृदयं ज्ञात्वा मयूरं समानितवान्। ततः कदाचिद्रात्रौ सौधोपरि क्रीडापरो राजा शशाङ्कमालोक्य प्राह ।

यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते ।
तदाचष्टे लोकः शशक इति नो मां प्रति तथा ॥

ततश्चाधोभूमौ सौधान्तरप्रविष्टः कश्चिच्चोर आह ।

अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकणकलङ्काङ्किततनुम् ॥

राजा तत् श्रुत्वा प्राह अहो! महाभाग! कस्त्वमर्द्धरात्रे कोशगृहमध्ये तिष्ठसीति, स आह देव! अभयं नो देहीति, राजा तथेति ततो राजानं स चोरः प्रणम्य स्ववृत्तान्तमकथयत् तुष्टो राजा चोराय दशकोटिः सुवर्णस्याष्टौ मत्तान् गजेन्द्रांश्च ददौ ततः कोशाधिकारी धर्म्मपत्रं लिखति ।

तस्मै चोराय प्रतिनियतवस्तुप्रतिभिये
प्रभुः प्रीतः प्रादादुपरितनपादद्वयकृते ।

सुवर्णानां कोटीर्दशदशनकोटिक्षतगिरीन्
गजेन्द्रानप्यष्टौ मदमुदितकूजन्मधुलिहः ॥

ततः कदाचित् द्वारपाल आगत्य प्राह, देव ! कौपीनावशेषो विद्वान् द्वारिवर्त्तत इति, राजा प्रवेशयेति, ततः प्रविष्टः स कविर्भोजमालोक्य, अद्य मे दारिद्र्यनाशो भविष्यतीति मत्वा तुष्टो हर्षाश्रूणि मुमोच, राजा तमालोक्य प्राह, कवे ! किं रोदिषीति ततः कविराह, राजन्! आकर्णय मद्गृहस्थितिम्।

अये लाजा उच्चैः पथिवचनमाकर्ण्य गृहिणी
शिशोः कर्णौ यत्नात् सुपिहितवती दीनवदना ।
मयि क्षीणोपाये यदकृतदृशावश्रुबहुले
तदन्तः शल्यं मे त्वमसि पुनरुद्धर्त्तुमुचितः ॥

राजा शिव शिव कृष्ण कृष्णेत्युदीरयन्, प्रत्यक्षरलक्षं दत्त्वा प्राह, सुकवे ! त्वरितं गच्छ गेहं, त्वद्गृहिणी खिन्नाभूदिति । ततः कदाचिन् मृगया परिश्रान्तो राजा कस्यचिन्महादृक्षस्य छायामाश्रित्य तिष्ठति स्म । तत शाम्भवदेवी नाम कविः कश्चिदागत्य राजानं वृक्षमिषेणाह ।

आमोदैर्मरुतो, मृगाः किसलयोल्लासैः, स्त्रवातापसाः,
पुष्पैः षट्चरणाः,फलैः शकुनयोः घर्मार्दितश्छायया।

स्तान्वैर्गन्धगजास्त्वयैव विहिताः सर्वे कृतार्थास्ततः
त्वं विश्वोपकृतिक्षमोऽसि भवता भग्नाः पदोऽन्ये द्रुमाः ॥

किञ्च ।

अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि च हरति दृशं मालतीमाला ॥

ताभ्यां श्लोकाभ्यां चमत्कृतो राजा प्रत्यक्षरं लक्षं ददौ, अन्यदा श्रीभोजः श्रीमहेश्वरं गन्तुं शिवालयमभ्यगात् । तदा कोऽपि ब्राह्मणो राजानं शिवसन्निधौ प्राह, देव !

अर्द्धं दानववैरिणा, गिरिजयाप्यर्द्धं शिवस्याहृतं
देवेत्थं जगतीतले पुरहराभावे समुन्मीलति ।
गङ्गासागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां तु भिक्षाटनम् ।

राजा अक्षरलक्षं ददौ, ततः कदाचिद्द्वारपाल आगत्य प्राह, देव ! कोऽपि विद्वान् द्वारि तिष्ठतीति । राजा प्रवेशयेति, ततः प्रविष्टो विद्वान् । पठति ।

क्षणमप्यनुगृह्णाति यं दृष्टिस्तेऽनुरागिणी ।
ईर्ष्ययेव त्यजत्याशु तं नरेन्द्र ! दरिद्रता ॥

राजा लक्षं ददौ, पुनरपि पठति कविः ।

केचिन्मूलाकुलाशाः कतिचिदपि पुनस्स्कन्धसम्बन्धभाजः
छायां केचित् प्रपन्नाः प्रपदमपि परे पल्लवानुन्नयन्ति ।
अन्ये पुष्पाणि पाणौ दधति तदपरे गन्धमात्रस्य पात्रं
वाग्वल्ल्याः किन्तु मूढाः फलमहह ! न हि द्रष्टुमप्युत्सहन्ते ॥

एतदाकर्ण्य बाणः प्राह ।

परिच्छिन्नस्वादोऽमृतगुडमधुक्षौद्रपयसां
कदाचिच्चाभ्यासाद्भजति ननु वैरस्यमधिकम् ।
प्रियाबिम्बोष्ठे वा रुचिरकविवाक्येऽप्यनवधि
र्नवानन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ॥

ततो राजा लक्षं दत्तवान् । ततः कदाचित् सिंहासनमलङ्कुर्वाणे श्रीभोजे द्वारपाल आगत्य प्राह, देव ! वाराणसीदेशादागतः कोऽपि भवभूतिर्नाम कविः द्वारि तिष्ठतीति । राजा प्राह, प्रवेशयेति, ततः प्रविष्टः सोऽपि सभामगात् । ततः सभ्याः सर्वे तदागमनेन तुष्टा अभूवन् । राजा च भवभूतिं प्रेक्ष्य प्रणमति स्म । स च स्वस्तीत्युक्त्वा तदाज्ञयोपविष्टः । भवभूतिः प्राह, देव !

नानीयन्ते मधुनि मधुपाः पारिजातप्रसूनैः
नाभ्यर्थ्यन्ते तुहिनरुचिणश्चन्द्रिकायां चकोराः ।
अस्मद्वाङ्माधुरिमधुरमापद्य पूर्वावताराः

सोल्लासाः स्युःस्वयमिह बधाः किं मुधाभ्यर्थनाभिः ॥

नास्माकं शिबिका न कापिकटकाद्यालङ्क्रियासत्क्रिया
नोत्तुङ्गस्तुरगो नकश्चिदनुगो नैवाम्बरं सुन्दरम् ।
किंतु क्ष्मातलवर्त्यशेषविदुषां साहित्यविद्याजुषाम्
चेतस्तोषकरी शिरोनतिकरी विद्यानवद्यास्ति नः ॥

इत्याकर्ण्य बाणपण्डितपुत्त्रः प्राह, धाः पाप! धराधीशसभायामहङ्कारं मा कृथाः ।

निश्वासोऽपि न निर्याति बाणे हृदयवर्त्मनि ।
किं पुनः प्रकटाटोपपदबद्धा सरस्वती ? ॥

ततो भवभूतिः पराभवमसहमानः प्राह ।

हठाद्याकृष्टानां कतिपयपदानां रचयिता
जनः स्पर्द्धालुश्चेदहह ! कविना वश्यवचसा ।
भवेदद्यश्वो वा किमिह बहुना पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥

पुनराह,

कालिदासकवेर्वाणी कदाचिन्मद्गिरा सह ।
कलयत्यर्थसाम्यं चेद्भीताभीता पदे पदे ॥

ततः कालिदासः प्राह, सखे भवभूते! महाकविरसि अत्र किम् वक्तव्यम् ।

एषा धारेन्द्रपरिषन्महापण्डितमण्डिता ।

आवयोरन्तरं वेत्ति राजा वा शिवसन्निभः ॥

तच्छ्रुत्वा राजा प्राह, युवाभ्यां रत्यन्तो वर्णनीय इति । भवभूतिः-

मुक्ताभूषणमिन्दुबिम्बमजनि व्याकीर्णतारं नभः
स्मारं चापमपेतचापलमभूदिन्दीवरे मुद्रिते ।
व्यालीनं कलकण्ठमन्दरणितं मन्दानिलैर्मन्दितं
पिष्यन्दस्तवका च चम्पकलता साधून्नजाने ततः ॥

ततः कालिदासः प्राह ।

स्विन्नं मण्डलमैन्दवं विलुलितस्रग्भारनद्धन्तमः
प्रागेवप्रथमानकैतकशिखालीलायितं सुस्मितम् ।
श्रान्तं कुण्डलताण्डवं कुवलयद्वन्द्वं तिरोमिलितं
वीतं विद्रुमसीत्कृतं न हि ततो जाने किमासीदिति ।

राजा कालिदासं प्राह, सुकवे ! भवभूतिना सह साम्यं तव न वक्तव्यम् । भवभूतिराह देव ! किमिति वारयसि ? राजा- सर्वप्रकारेण कविरसि । ततो बाणः प्राह, राजन् ! भवभूतिः कविः कालिदासो वा ?-वक्तव्यः राजा-बाणकवे ! भवभूतिः कविर्न, किं तु पार्वत्याः कश्चिदवनौ पुरुषावतार एव ॥ ततो भवभूतिराह देव ! किमत्र प्राशस्त्यम्भाति ? राजा-प्राह, भवभूते ! किमु वक्तव्यम् प्राशस्त्यं कालिदास

श्लोके, यतः कैतकशिखालीलायितं सुस्मितमिति पठितम् । ततो भवभूतिराह देव ! पक्षपातेन वद-सीति ॥ ततः कालिदासः प्राह, देव ! अपख्याति र्भा-भूत् भुवनेश्वरीदेवतालयं गत्वा, तत्सन्निधौ तां पुर-स्कृत्य धरायां शोधनीयं त्वया । ततो भोजः सर्व्वक-विद्वत्परिवृतः सन् भुवनेश्वरीदेवालयं प्राप्य, तत्र तत्सन्निधौ भवभूतिहस्ते धरां दत्वा श्लोकद्वयञ्च तुल्यपत्रद्वये लिखित्वा तुलायां मुमोच ! ततो भव-भूतिभागे लघुत्वोद्भूतां दूषदुन्नतिं ज्ञात्वा,देवी भक्त-पराधीना, सदसि तत् परिभवो मा भूदितिस्वावतं सकलह्लारमकरन्दं वामकरनखाग्रेण गृहीत्वा; भवभूतिपत्रे चिक्षेप, ततः कालिदासः प्राह ।

अहो मे सौभाग्यं मम च भवभूतेश्च भणितम्
धरायामारोप्य, प्रतिफलित तस्यां लघिमनि ।
गिरां देवी सद्यः श्रुतिकलितकल्हारकलिका
मधुलीमाधुर्य्यं क्षिपति परिपूर्त्यै भगवती ॥

ततः कालिदासः पादयोः पतति, भवभूतिःराजा-नञ्च विशेषञ्च मनुतेस्म । ततो राजा भवभूतिकवये शतमत्तगजान् ददौ । अन्यदा राजा धारानगरे रात्रावेकाकी विचरन्, काञ्चनस्वैरिणीं दृष्ट्वा

गच्छन्तीं दृष्ट्वा पप्रच्छ, देवि ! का त्वमेकाकिनी मध्यरात्रौ क्व गच्छसीति। ततश्चतुरा स्वैरिणी सा तं रात्रौ विचरन्तं श्रीभोजं निश्चित्य प्राह।

त्वत्तोऽपि विषमो राजन् ! विषमेषुः क्षमापते।
शासनं यस्य रुद्राद्या दासवन्मूर्ध्नि कुर्वते॥

ततस्तुष्टो राजा दोर्दण्डादादाय अङ्गदं वलयञ्च तस्यै दत्तवान्। सा च यथास्थानं प्राप। ततो वर्त्मनि गच्छन् क्वचित् गृहे एकाकिनीं रुदन्तीं नारीं दृष्ट्वा, किमर्थमर्द्धरात्रौ रोदिति, किं दुःखमेतस्या इति विचारयितुमेकमङ्गरक्षकं प्राहिणोत्। ततोऽङ्गरक्षकः पुनरागत्य प्राह देव ! मया दृष्टा यदाह तत् शृणु।

वृद्धो मत्पतिरेष मञ्चकगतः स्थूणावशेषं गृहम्
कालोऽयं जलदागमः,कुशलिनी वत्सस्य वार्तापि न।
यत्नात् सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां निजबधूं श्वश्रूश्चिरं रोदिति॥

ततः कृपावारिधिः क्षोणीपालः तस्यै लक्षं ददौ,

अन्यदा कोङ्कणदेशवासी विप्रः राज्ञे स्वस्तीत्युक्त्वा प्राह।

शुक्तिद्वयपुटे भोजयशोऽब्धौ तव रोदसी।

अन्ये तद्गुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥

राजा तस्मै लक्षं ददौ, अन्यदा काश्मीरदेशात् कोऽपि कौपीनावशेषो राजनिकटस्थवावीन् कनक-माणिक्यपट्टदुकूलालङ्कृतान् अवलोक्य राजानं प्राह,

नो पाणीवरकङ्कणक्वणयतो नो कर्णयोः कुण्डले
क्षुभ्यत्क्षीरधिदुग्धमुग्धमहसी नो वाससी भूषणम् ।
दन्तस्तम्भविकासिका न शिविका न श्वोऽपिविश्वेन्नतो
राजन् ! राजसभासुभाषितकलाकौशल्यमेवास्ति नः ॥

ततस्तस्मै राजा लक्षं ददौ, अन्यदा राजा रात्रौ चन्द्रमण्डलं दृष्ट्वा तदन्तस्थकलङ्कं वर्णयति स्म ।

अङ्कं कोऽपि शशं तया जलनिधेः पङ्कं परे मेनिरे ।
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे ॥

इति राजा पूर्व्वार्द्धं लिखित्वा कालिदासहस्ते ददौ, ततः स तस्मिन्नेव क्षणे उत्तरार्द्धं लिखति कविः ।

इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरी दृश्यते ।
तत्सान्द्रं निशिपीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥

राजा प्रत्यक्षरलक्षमुत्तरार्द्धस्य दत्तवान् । ततः राजा कालिकासकवितापद्धतिं वीक्ष्य चमत्कृतः पुन-राह,

सखे! अकलङ्कं चन्द्रमसं व्यावर्णयेति, ततः कविः पठति ।

लक्ष्मीक्रीडातडागोऽतिधवलगृहं दर्पणो दिग्वधूनां
पुष्पं श्यामालतायास्त्रिभुवनजयिनो मन्मथस्यातपत्रम्
पिण्डीभूतं हरस्य स्मितममरधुनीपुण्डरीकं मृगाङ्को
ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोलकस्य ।

राजा पुनः प्रत्यक्षरलक्षं ददौ, एकदा कश्चित् दूरदेशादागतः वीणाकविराह,

तर्कव्याकरणाध्वनीनधिषणो नाहं न साहित्यवित्
नो जानामि विचित्रवाक्यरचनाचातुर्य्यमल्पं, ततः ।
देवी कापि विरिञ्चिवल्लभसुतापाणिस्थवीणाकल-
क्वाणाभिन्नरवं तथापि किमपि ब्रूते मुखस्था मम ॥

राजा तस्मै लक्षं ददौ, बाणः तस्य सुललितप्रबन्धं श्रुत्वा प्राह, देव !

मातङ्गीमिव माधुरीं ध्वनिविदो नैव स्पृशन्त्युत्तमाम्
व्युत्पत्तिं कुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी ।
कस्तूरीघनसारसौरभसुहृत् व्युत्पत्तिमाधुर्य्ययो-
र्योगः कर्णरसायनं सुकृतिनः कस्यापि सम्पद्यते ॥

अन्यदा राजा सीतां प्रातः प्राह, देवि ! प्रभातं व्यावर्णयेति सीता प्राह,

विरलविरलाः स्थूलास्ताराः कलाविव सज्जना

मन इव मुनेः सर्व्वत्रैव प्रसन्नमभून्नभः ।
अपसरति ध्वान्तं चित्तात् सतामिव दुर्ज्जनः
व्रजति च निशा क्षिप्रं लक्ष्मीर्निरुद्यमादिव ॥

राजा लक्षं दत्त्वा कालिदासं प्राह, सखे! सुकवे! त्वमपि प्रभातं व्यावर्णयेति; कालिदासः ।।

अभूत् पिङ्गा प्राची रसपतिरिव प्राप्यकनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।
क्षणात् क्षीणास्तारा नृपतय इवानुद्यमपरा
न दीपा राजन्ते विनयरहितानामिव गुणाः ॥

राजा तस्मै प्रत्यक्षर-लक्षं ददौ, अन्यदा द्वार-पाल आगत्य प्राह, देव ! कापि मालाकारपत्नी द्वारि तिष्ठतीति । राजा प्रवेशयेति, ततः प्रवेशिता सा च नमस्कृत्य पठति,

समुन्नतघनस्तनस्तबकचुम्बितुं वीफल—
क्वणन्मधुरवीणया विबुधलोकलोलभ्रुवा ।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुर-
त्तुषारकरकन्दलीकिरणपूरगौरं यशः ।।

राजा अहो ! महती पदपद्धतिरिति तस्याः प्रत्यक्षरलक्षं ददौ । अन्यदा रात्रौ राजा धारानगरे विचरन्, कस्यचित् गृहे कामपि कामिनीमुलूखल-

परायणां ददर्श । राजा तां तरुणीं पूर्णचन्द्राननां सुकुमाराङ्गीं विलोक्य तत्करस्थं मुसलं प्राह, हे मुसल ! एतस्याः करपल्लवस्पर्शेनापि त्वयि किसलयं नासीत् । तर्हि सर्वथा काष्ठमेव त्वमिति । ततो राजा एकं चरणं पठतिस्म ।

मुसल ! किसलयन्ते तत्क्षणाद्यन्न जातम् ।

ततो राजा प्रातः सभायां समागतं कालिदासं वीक्ष्य, मुसल ! किसलयन्ते तत्क्षणाद्यन्न जातम्, इति पठित्वा सुकवे ! त्वं! चरणत्रयं पठेत्युवाच, ततः कालिदासः प्राह,

जगति विदितमेतद् काष्ठमेवासि नूनं
तदपि च किल सत्यं कानने वर्द्धितोऽसि ।
नवकुवलयनेत्रीपाणिसङ्गोत्सवेऽस्मिन्
मुसल ! किसलयन्ते तत्क्षणाद्यन्न जातम् ॥

ततः राजा चरणत्रयस्य प्रत्यक्षरं लक्षं ददौ, अन्यदा राजा दीर्घकालं जलकेलिं विधाय परिश्रान्त-स्तत्तीरस्थवटविटपिच्छायायां निषण्णः, तत्र कश्चित् कविरागत्य प्राह ।

कनं सैन्यरजोभरेण भवतः श्रीभोजदेव क्षमा
रक्षा दक्षिणदक्षिणक्षितिपतिःप्रेक्ष्यान्तरीक्षं क्षणात् ।

निःशङ्को निरपत्रयो निरनुगो निर्बान्धवो निःसुहृत्
निस्त्रीको निरयुत्यको निरनुजो निश्छोटको निर्गतः ।

किञ्च । अकाण्डधृतमानसव्यवसितोत्सवैस्मारसै-
रकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः ।
दिशस्समवलोकिताः सरसनिर्भरप्रोल्लसत्,
भवत्पृथुवरूथिनी रजनिभूरजश्यामलाः ॥

ततो राजा लक्षद्वयं ददौ; तदानीमेव तस्य शाखायां मेकं काकं रटन्तं प्रेक्ष्य, कोकिलञ्चान्य-शाखायां कूजन्तं वीक्ष्य, देवजयनामा कविराह ।

नो चारू चरणौ न चापि चतुरा चञ्चूर्न वाच्यं वचो
नो लीलाचतुरा गतिर्न च शुचिः पक्षग्रहोऽयं तव ।
क्रूरकेङ्कृतिनिर्भरां गिरमिहस्थाने वृथैवोद्गिरन्
मूर्खध्वांक्ष ! न लज्जसे? ऽप्यसदृशं पाण्डित्यमुन्नाटयन् ॥

ततः एनां देवजयकविना काकमिषेण विरचितां स्वगर्हणां मन्यमान स्तत्सद्मीलुः हरिशर्मा नाम कविः कोपेनेर्ष्यापूर्वं प्राह ।

तुल्यवर्णच्छदैः कृष्णः कोकिलैः सह सङ्गतः ।
केन वा ख्यायते काकः स्वयं यदि न भाषते ॥

ततो राजा तयोः हरिशर्म्मदेवजययो रन्योऽन्य-वैरं ज्ञात्वा, मिथ आलिङ्गनादिवस्त्रालङ्कारादिदानेन

च मित्वं व्यधात्। अन्यदा राजा यानमारुह्य गच्छन् वर्त्मनि कञ्चित्तपोनिधिं दृष्ट्वा तं प्राह, भवादृशानां दर्शनं भाग्यायत्तम्। भवतां क्व स्थितिः? भोजनार्थं के वा प्रार्थ्यन्त इति?। ततः स राजवचनमाकर्ण्य तपोनिधिः प्राह।

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम्।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः॥

राजन्! वयं कमपि नाश्रयामः न स्तौम-इति। राजा तुष्टो नमति। तत उत्तरदेशादागत्य कश्चिद्राजानं स्तुत्याह, तत्र राजा पृच्छति विद्वन्! कुत्र ते स्थितिरिति? विद्वानाह,

यत्र त्वं निन्द्यत्यक्तम् अन्त्यजाश्च सुरेश्वरान्।
चिन्तामणिश्च पाषाणं तत्र नो वसतिः प्रभो!॥

तदा राजा लक्षं दत्त्वा प्राह, काशीदेशे का विशेषवार्त्तेति। स आह देव! इदानीं काचिदद्भुतवार्त्ता तत्र लोकमुखेन श्रुता 'देवा दुःखेन दीना, इति। राजा देवानां कुतो दुःखं? विद्वन्! स चाह,

निवासः क्वाद्य नो दत्तो भोजेन कनकाचलः ।
इतिव्यग्रधियो देवा भोज ! वार्त्तेतिनूतना ॥

ततो राजा कुतूहलोक्त्या तुष्टः सन् तस्मै पुनः लक्षं ददौ । ततो द्वारपालः प्राह, देव ! श्रीशैलादागतः कश्चिद्विद्वान् ब्रह्मचर्य्यनिष्ठः द्वारि वर्त्तत इति। राजा प्रवेशयेत्याह । तत आगत्य ब्रह्मचारी चिरं जीवेति वदति । राजा तं पृच्छति ब्रह्मन् ! बाल्य एव कलिकालाननुरूपं किं नाम व्रतं ते ? अन्वहमुपवासेन कृशोऽसि, कस्यचित् ब्राह्मणस्य कन्यां तुभ्यं दापयिष्यामि, त्वञ्चेद्गृहस्थधर्ममङ्गीकरिष्यसीति । ब्रह्मचारी प्राह देव ! त्वमीश्वरस्त्वया किमसाध्यम् ?

सारङ्गाः सुहृदो,गृहंगिरिगुहा,शान्तिःप्रियागेहिनी,
वृत्तिर्वन्यलताफलै, र्निवसनं श्रेष्ठं तरूणां त्वचः ।
त्वद्ध्यानामृतपूरमग्नमनसां येषामियं निर्वृति-
स्तेषामिन्दुकलावतंसयमिनां मोक्षेऽपि नो स्पृहाः ।

राजा उत्थाय पादयोः पतति, आह च ब्रह्मन् ! मया किं कर्त्तव्यमिति । स आह देव ! वयं काशीं जिगमिषवः तत एकं विधेहि ये त्वत्सदने पण्डितवराः तान् सर्वानपि समलोकान् काशीं प्रति प्रेषय । ततोऽहं गोष्ठीलुब्धः काशीं गमिष्यामीति । राजा

तथा चक्रे। ततः सर्वे पण्डितवरास्तदाज्ञया प्रस्थिताः, कालिदास एको न गच्छतिस्म, तदा राजा कालिदासं प्राह, सुकवे! त्वं कुतो न गतोऽसीति? । ततः कालिदासो राजानं प्राह, देव! सर्वज्ञोऽसि ।

ते यान्ति तीर्थेषु बुधा ये शम्भोर्दूरवर्त्तिनः ।
यस्य गौरीश्वरश्चित्ते तीर्थं भोज! परं हि तत् ॥

ततो विद्वत्सु काशीं गतेषु राजा कदाचित् सभायां कालिदासं पृच्छतिस्म. कालिदास! अद्य किमपि श्रुतं किं त्वयेति । स आह,

मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले
कैलासस्य शिलातलेषु मलयप्राग्भारभागेष्वपि ।
सह्याद्रावपि तेषु तेषु बहुशो भोज!श्रुतं ते मया
लोकालोकविचारणगणैरुद्गीयमानं यशः ॥

ततश्चमत्कृतो राजा प्रत्यक्षरलक्षं ददौ॥ ततः कदाचिद्राजा विहर्तुं स्वैरं निर्गतं, कालिदासञ्च अनवरतवेश्यालम्पटं ज्ञात्वा व्यचिन्तयत् । अहह! बाणमयूरप्रभृतयो मदीयामाज्ञां व्यदधुः, अयञ्च वेश्यालम्पटतया ममाज्ञां नाद्रियते, किं कुर्म्म इति । ततो राजा सावज्ञं कालिदास मपश्यत्, तत आत्मनि राज्ञोऽवज्ञां ज्ञात्वा कालिदासः अज्ञातदेशं गत्वा

तद्देशाधिनाथं प्राह, देव ! मालवेन्द्रस्य भोजस्याज्ञया त्वद्देशं प्राप्तोऽहं कालिदास नामकविरिति । ततो राजा तमासने उपवेश्य प्राह, सुकवे ! भोजसभाया इहागतैः पण्डितैः वर्णितः शतशस्ते महिमा, सुकवे ! त्वां सरस्वतीं वदन्ति । ततः किमपि पठेति, ततः कालिदास आह ।

अल्लालक्षोणिपाल!त्वदहितनगरे सञ्चरन्ती किराती
कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी।
क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्राधमन्ती
श्वासामोदानुपातैर्मधुकरनिकरैर्धूमशङ्कां बिभर्त्ति ॥

ततस्तस्मै प्रत्यक्षरलक्षं ददौ । ततः कदाचिदल्लालराजा कालिदासं पप्रच्छ सुकवे ! एकशिलानगरीं व्यावर्णयेति । ततः कविराह ।

अपाङ्गपातैरपदेशपूर्वैरेणीदृशामेकशिलानगर्याम् ।
वीथीषुवीथीषु विनापराधं पदेपदे शृङ्खलिता युवानः॥

पुनश्च प्रत्यक्षरलक्षं ददौ । पुनश्च पठति कविः ।

अम्भोजपत्रायतलोचनानामम्भोधिदीर्घास्विह दीर्घिकासु ।
समागतानां कुटिलैरपाङ्गैरनङ्गबाणैः प्रहता युवानः॥

पुनश्च अल्लालनृपः प्रत्यक्षरलक्षं ददौ । एवं तत्रैव स्थितः कालिदासः । अत्रान्तरे धारानगर्यां

भोजं प्राप्य द्वारपालः प्राह, देव ! गुर्जरदेशात् माघनामा पण्डितवर आगत्य नगराद्बहिरास्ते। तेन च स्वपत्नी राजद्वारि प्रेषिता । राजा तां प्रवेशयेत्याह । ततो माघपत्नी प्रवेशिता । सा राजहस्ते पत्रं प्रायच्छत् । राजा तदादाय वाचयति ।

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिनिहतानां हा ! विचित्रो विपाकः॥ इति

राजा तदद्भुतं प्रभातवर्णनमाकर्ण्य लक्षत्रयं दत्त्वा माघपत्नीमाह, मातः ! इदं भोजनाय दीयते। प्रातरहं माघपण्डितम् आगत्य नमस्कृत्य पूर्णमनोरथं करिष्यामीति । ततः सा तदादाय गच्छन्ती याचकानां मुखात् स्वभर्त्तुः शारदचन्द्रकिरणगौरान् गुणान् श्रुत्वा, तेभ्य एव धनमखिलं भोजदत्तं दत्तवती, माघपण्डितं स्वभर्त्तारमासाद्य प्राह, नाथ ! राज्ञा भोजेनाहं बहुमानिता, धनं सर्वं याचकेभ्यस्त्वद्गुणानाकर्ण्य दत्तवती । माघः प्राह, देवि ! साधु कृतं, परमेते याचकाः समायान्ति किल, तेभ्य किं

देयमिति ? ततो माघपण्डितं वस्त्रावशेषं ज्ञात्वा कोऽप्यर्थी प्राह ।

आश्वास्य पर्वतकुलं तपनोष्णतप्त-
मुद्दामदावविधुराणि च काननानि ।
नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद ! सैव तवोत्तमश्रीः ।

इत्येतदाकर्ण्य माघः स्वपत्नीमाह ।

अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागे रतिं वहति दुर्ललितं मनो मे ।
याच्ञा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं परिदेवितेन ॥

दारिद्र्यानलसन्तापः शान्तः सन्तोषवारिणा ।
याचकाशाविघातान्तर्दाहः केनोपशाम्यतीति ॥

ततस्तदा माघपण्डितस्य तामवस्थां विलोक्य सर्वे याचकाः यथास्थानं जग्मुः एवं तेषु याचकेषु यथायथं गच्छत्सु माघः प्राह ।

व्रजत व्रजत प्राणा अर्थिभिर्व्यर्थतां गतैः ।
पश्चादपि च गन्तव्यं क्व सोऽर्थः पुनरीदृशः ॥

इति विलपन् माघपण्डितः परलोकमगात्, ततो माघपत्नी स्वामिनं परलोकगतं दृष्ट्वा प्राह ।

सेवन्तेस्म गृहं यस्य दासवत् भूभुजः सदा ।
स स्वभार्य्यासहायोऽयं म्रियते माघपण्डितः ॥

ततो राजा माघं विपन्नं ज्ञात्वा निजनगराद्विप्रशताढ्यतः मौनी रात्रावेव तत्रागात्, ततो माघपत्नी राजानं वीक्ष्य प्राह, राजन् ! यतः पण्डितवरस्त्वद्देशं प्राप्तः परलोकमगात्, ततोऽस्य कृत्यशेषं सम्यक् करणीयं भवतेति, ततो राजा माघं विपन्नं नर्म्मदातीरं नीत्वा यथोक्तेन विधिना संस्कारमकरोत् । तत्र च माघपत्नी वह्नौ प्रविष्टा । तयोश्च पुत्रवत् सर्वं चक्रे भोजः । ततो माघे दिवं गते राजा शोकाकुलो विशेषेण कालिदासवियोगेन च पण्डितानां प्रवासेन कृशोऽभूत् दिने दिने बहुलपक्षशशीव । ततोऽमात्यैर्विमृश्य चिन्तितम् अस्माद्देशे कालिदासो वसति । तस्मिन्नागते राजा सुखी भविष्यतीति । एवं विचार्य्यामात्यैः पत्रे किमपि लिखित्वा तत् पत्रमेकस्यामात्यस्य हस्ते दत्त्वा प्रेषितम् । स कालक्रमेण कालिदासमासाद्य राज्ञोऽमात्यैः प्रेषितोऽस्मीति नत्वा तत् पत्रं दत्तवान् । ततस्तत्कालिदासो वाचयति ।

न भवति स भवति न चिरं भवति चिरञ्चेत्

फलेविसंवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ।

सहकारे चिरं स्थित्वा सलीलं बालकोकिल ! ।
तं हित्वा ह्यान्यवृक्षेषु विचरन्न विलज्जसे ॥
कलकण्ठ । यथा शोभा सहकारे भवद्गिरः ।
खदिरे वा पलाशे वा किं तथा स्याद्विचारय ॥ इति

ततः कालिदासः प्रभाते तं भूपालमापृच्छ्य मालवदेशमागत्य राज्ञः क्रीड़ोद्याने तस्थौ । ततो राजा च तत्रागतं ज्ञात्वा स्वयं गत्वा महता परिवारेण तमानीय सम्मानितवान् । ततः क्रमेण विद्वन्मण्डले च समायाते सा भोजपरिषत् प्रागिव रेजे । ततः सिंहासनमलङ्कुर्वाणं भोजं द्वारपाल आगत्य प्रणम्याह, देव ! कोऽपि विद्वान् जालन्धरदेशादागत्य द्वार्यास्त इति । राजा प्रवेशयेत्याह । स च विद्वानागत्य सभायां तथाविधं राजानं जगन्मान्यान् कालिदासादीन् कविपुङ्गवान् वीक्ष्य बद्धजिह्व इवाजायत । सभायां किमपि तस्य मुखान्न निःसरति, तदा राज्ञोक्तं विद्वन् ! किमपि पठेति । स आह,

आरनालगलदाहशङ्कया मन्मुखादपगता सरस्वती ।
तेन वैरिकमलाकचग्रहव्यग्रहस्त न कवित्वमस्ति मे ॥

राजा तस्मै महिषीपदं ददौ। अन्यदा राजा कौतुकाकुलः सीतां प्राह। देवि! सुरतं पठेति। सीता प्राह।

सुरताय नमस्तस्मै जगदानन्दहेतवे।
आनुषङ्गिफलं यस्य भोजराज! भवादृशाम्॥

ततस्तुष्टो राजा तस्यै हारं ददौ। ततो राजा चामरग्राहिणीं वेश्यामवलोक्य कालिदासं प्राह। सुकवे! वेश्यामेनां वर्णयेति। तामवलोक्य कालिदासः प्राह।

कचभारात्कुचभारः कुचभाराद्भीति कचभारः।
कचकुचभाराज्जघनं कोऽयं चन्द्रानने! चमत्कारः॥

भोजस्तुष्टः सन् स्वयमपि पठति।

वदनात्पदयुगलीयं वचनादधरश्च दन्तपंक्तिस्तकचतः।
कुचयुगलीयं लोचनयुगलं च मध्यतस्तसति॥

अन्यदा राजाभोजो धारानगरे एकाकी विचरन् कस्यचिद्विप्रवरस्य गृहं गत्वा तत्र काञ्चनपतिव्रतां स्वाङ्के शयानं भर्त्तारमुद्वहन्तीमपश्यत्। ततः तस्याः शिशुः सुप्तोत्थितः ज्वालायाः समीपगच्छत्। इयं च पतिधर्म्मपरायणा स्वपतिं नोत्थापयामास। ततः शिशुश्च वह्नौ पतन्तं नागृह्णत्। राजा चास्याश्चमा-

लोक्यातिष्ठत् । ततः सा पतिधर्म्मपरायणा वैश्वानर-मभ्यार्थयत्, यज्ञेश्वर ! त्वं सर्वकर्म्मसाक्षी सर्वधर्म्मान् जानासि, मां पतिधर्म्मपराधीनां शिशुमग्टच्छन्तीं च जानासि । ततो मदीयशिशुमनुगच्छ त्वं मा दहेति । ततः शिशुः यज्ञेश्वरं प्रविश्य अर्द्धघटिकापर्य्यन्तं तत्रैवातिष्ठत्, ततो नारोदीत् प्रसन्नमुखश्च शिशुः; साच ध्यानारूढातिष्ठत् । ततो यदृच्छया समुत्थिते भर्त्तरि सा झटिति शिशुं जग्राह । तं च परधर्म्म-मालोक्य विस्मयाविष्टो नृपतिराह । अहो ! मम समं भाग्यं कस्यास्ति, यदीदृश्यः पुण्यस्त्रियोऽपि मन्नगरे वसन्तीति । ततः प्रातः सभाया मागत्य सिंहासने उपविष्टः राजा कालिदासं प्राह । सुकवे ! महदाश्चर्य्यं मया पूर्व्वेद्युरात्रौ दृष्टमस्तीत्युक्त्वा राजा पठति ।

जातशनश्चन्दनपङ्कशीतल इति ।

कालिदास स्ततश्चरणत्रयं झटिति पठति ।

सुतं पतन्तं प्रसमीक्ष्यपावके नबोधयामासपतिंपतिव्रता: !
तदाभवत्तत्पतिभक्तिगौरवात्जातशनश्चन्दनपङ्कशीतलः

राजा च स्वाभिप्रायमालोक्य विस्मितस्तमालिङ्ग्य पादयोः पततिस्म । एकदा ग्रीष्मकाले राजा अन्तः-

पुरे विचरन् घर्मातपतप्तः आलिङ्गनादिकमकुर्वन् ताभिः सह सरसल्लापाद्युपचारमनुभूय तत्रैव सुप्तः। ततः प्रातरुत्थाय राजा सभां प्रविष्टः कुतूहलात् पठति ।

मरुदागमवार्त्तयापि शून्ये समये जाग्रति संप्ररूढ एव।

भवभूतिराह,—

उरगीशिशुवेणुभुजवेखामदिशत्कृतक्रतिमाननानिलेन।

राजा प्राह, भवभूते ! लोकोक्तिः सम्यगुक्तेति ।

ततोऽपाङ्गेन राजा कालिदासं पश्यति । ततः स आह ।

अबलासु विलासिनीऽन्वभूवन्नयनैरेव नवोपगूहनानि।

तदा राजा साभिप्रायं ज्ञात्वा तुष्टः कालिदासं विशेषेण सम्मानितवान् । अन्यदा मृगयापरवशो राजा अत्यन्तमार्त्तः कस्यचित् सरोवरस्य तीरे निविडच्छायस्य जम्बुवृक्षस्य मूलमुपाविशत् । तत्र शयाने राज्ञि जम्बोरुपरि बहुभिः कपिभिः जम्बूफलानि सर्वाण्यपि चालितानि । तानि सशब्दं पतितानि पश्यन् घटिकामात्रं स्थित्वा श्रमं परिहृतः, उत्थाय तुरङ्गममारुह्य गतः । ततः सभायां राजा पूर्वानुभूतकपिचलितफलपतनरवमनुकुर्वन् समस्यामाह ।

गुलुगुग्गुलुगुग्गुलु ।

तत आह, कालिदासः ।

जम्बूफलानि पक्वानि पतन्ति विमले जले ।
कपिकम्पितशाखाभ्यो गुलुगुग्गुलु गुग्गुलु ॥

राजा तुष्ट आह, सुकवे ! अदृष्टमपि परहृदयं कथं जानासि । देवपादप्रसादादिति सुकविर्मुहुः पादयोः पतति स्म । एकदा धारानगरे प्रच्छन्नवेशः विचरन् कस्यचित् वृद्धब्राह्मणस्य गृहं राजा मध्याह्नसमये गच्छन् तत्र तिष्ठति स्म । तदा वृद्धविप्रो वैश्वदेवं कृत्वा काकबलिं गृह्णन् गृहान्निर्गत्य भूमौ जलशुद्धायां निक्षिप्य काकमाह्वयति स्म । तत्र हस्तविस्फालनेन हाहेति शब्देन च काकाः समायाताः । तत्र कश्चित् काकरवं रटति स्म । तच्छ्रुत्वा तत्पत्नी तरुणी भीतेव हस्तन्निजोरसि निधाय अये मातः ! इति चक्रन्द । ततो ब्राह्मणः प्राह, प्रिये साधुशीले ! किमर्थं बिभेषीति । सा प्राह, नाथ!मादृशीनां पतिव्रतास्त्रीणां क्रूरध्वनिश्रवणं न सह्यम् । साधुशीले ! तथाभवे देवेति विप्र आह । ततो राजा तच्चरितं सर्वं दृष्ट्वा व्यचिन्तयत्, अहो ! इयं तरुणी दुःशीला नूनं, यतो निर्व्याजं बिभेति । स्वपातिव्रत्यं स्वयमेव कीर्त्तयति च । नूनमियं निर्भीता सती अत्यन्तं

दारुणं कर्म रात्रौ करोत्येव। एवं निश्चित्य राजा तत्रैव रात्रावन्तर्हित एवातिष्ठत्। अथ निशीथे भर्त्तरि सुप्ते सा मांसपेटिकां वेश्याकरेण वाहयित्वा नर्मदातीरमगच्छत्। राजाप्यात्मानं गोपयित्वाऽनुगच्छतिस्म। ततः सा नर्मदां प्राप्य तत्र समागतानां ग्राहाणां मांसं दत्वा नदीं तीर्त्वा अपरतीरस्थेन शूलाग्रारोपितेन स्वमनोरमेण सह रमतेस्म। तच्चरित्रं दृष्ट्वा राजा गृहं समागत्य प्रातः सभायां कालिदासमालोक्य प्राह, सुकवे! शृणु।

दिवाकाकरुताद्भीता,

ततः कालिदास आह।

रात्रौ तरति नर्मदाम्।

ततः तुष्टो राजा पुनः प्राह।

तत्र सन्ति जले ग्राहाः,

ततः कविराह। मर्म्मज्ञा सैव सुन्दरी॥

ततो राजा कालिदासस्य पादयोः पतति। एकदा धारानगरे विचरन् वेश्यावीथ्यां राजा कन्दुकलीलातत्परां तद्भ्रमणवेगेन पादयोः पतितां स्वरत्नां काञ्चनसुन्दरीं दृष्ट्वा सभायामाह, कन्दुकं वर्णयन्तु कवय इति। तदा भवभूतिराह।

१०

विदितं ननु कन्दुक! ते हृदयं प्रमदाधरसङ्गमलुब्ध इव।
वनिताकरतामरसाभिहतः पतितः पतितः पुनरुत्पतसि॥

ततो वररुचिः प्राह।

एकोऽपि त्रय इव भाति कन्दुकोऽयं
कान्तायाः करतलरागरक्तरक्तः।
भूमौ तच्चरणनखांशुगौरगौरः
खस्थः सन्नयनमरीचिनीलनीलः॥

ततः कालिदास आह।

पयोधराकारधरो हि कन्दुकः
करेण रोषादभिहन्यते मुहुः।
इतीव नेत्राकृतिभीतिमुत्पलं
स्त्रियः प्रसादाय पपात पादयोः॥

तदा राजा तुष्टस्त्रयाणामक्षरलक्षं ददौ। विशेषेण च कालिदासमदृष्टावतंसकुसुमपतनबोद्धारं सम्मानितवान्। ततः कदाचित् चित्रकर्मावलोकनतत्परः राजा चित्रलिखितं महाशेषं दृष्ट्वा सम्यक् लिखितमित्यवदत्। तदा कश्चिच्छिवशर्मा नाम कविः शेषमिषेण राजानं स्तौति।

अनेके फणिनः सन्ति भेकभक्षणतत्पराः।
एक एव हि शेषोऽयं धरणीधरणक्षमः॥

तदानीं राजा तदभिप्रायं ज्ञात्वा तस्मै लक्षं ददौ। कदाचिद्धेमन्तकाले समागते ज्वलन्तीं हसन्तीं संवेवयन् राजा कालिदासं प्राह। सुकवे! हसन्तीं वर्णयेति ततः सुकविराह।

कविमतिरिव बहुलोहा सुघटितचक्रा प्रभातवेलेव।
हरमूर्त्तिरिव हसन्ती भाति विधूमानलोपेता॥

राजा अक्षरलक्षं ददौ। एकदा भोजराजोऽन्तःपुरे भोगार्हास्तुल्यगुणाश्चतस्रो निजाङ्गना अपश्यत्। तासु च कुन्तलेश्वरपुत्र्यां पद्मावत्यां च ऋतुस्नानं, अङ्गराजस्य पुत्र्यां चन्द्रमुख्यां वसप्राप्तिं, कमलनामन्याश्च द्यूतपणजयलब्धप्राप्तिं, अग्रमहिष्यां च लीलादेव्यां दूतीप्रेषणमुखेनाह्वानं च एवं चतुरो गुणान् दृष्ट्वा तेषु गुणेषु न्यूनाधिकभावं चिन्तयन् तत्र सर्वतदाक्षिण्यनिधिः राजराजः श्रीभोजः तुल्यभावेन द्वित्रिघटिकापर्य्यन्तं विचिन्त्य विशेषानवधारणेन निद्रां गतः। प्रातश्चोत्थाय कृताह्निकः सभामगात्। तत्र च सिंहासनमलङ्कुर्वाणः श्रीभोजः सकलविद्वत्कविमण्डलमण्डनं कालिदासमालोक्य सुकवे! इमां वाचरीं न तुरीयचरणां समस्यां शृणु इत्युक्त्वा पठति।

ऽप्रतिपत्तिमूढमनसा द्विताः स्थिता नाड़िकाः ।

इति पठित्वा राजा कालिदासमाह सुकवे ! एतत्समस्यापूरणं कुर्विति । ततः कालिदासः तस्य हृदयं करतलामलकवत् प्रपश्यन् त्र्यक्षराधिकचरण-त्रयविशिष्टां तां समस्यां पठति ।

देव!ख्याता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु
र्द्यूतैर्रात्रिरियं जिता कमलयादेवी प्रसाद्याधुना ।
इत्यन्तःपुरेसुन्दरीजनगुणे न्यायाधिकं ध्यायता
देवेनाप्रतिपत्तिमूढमनसा द्विताः स्थिता नाड़िकाः ॥

तदा राजा स्वहृदयमेव ज्ञातवतः कालिदासस्य पादयोः पतति स्म । कविमण्डलञ्च चमत्कृतमजा-यत । एकदा राजा धारानगरे विचरन् क्वचित् पूर्णकुम्भन्धृत्वा समायान्तीं पूर्णचन्द्राननां काञ्चि-द्दृष्ट्वा तत्कुम्भजले शब्दञ्च कञ्चनं श्रुत्वा मुखमेव तस्याः कण्ठग्रहेऽयं घटः रतिकूजितमिव कूजतीति, मन्य-मानः सभायां कालिदासमाह ।

कूजितं रतिकूजितमिति । कविराह

विदग्धे सुमुखे रक्ते नितम्बोपरि संस्थिते ।
कामिन्याश्लिष्टसुगले कूजितं रतिकूजितम् ॥

तदा तुष्टो राजा प्रत्यक्षरलक्षं ददौ ननामच ।

एकदा नर्मदायां मध्याह्ने जालकैरेकः शिलाखण्डे इमश्लोकशिलाचरः कश्चित्दृष्टः। तैश्च परिचिन्तितं इदमक्षरलिखितमिव किञ्चिज्ञाति। नूनमिदं राजनिकटं नेयमिति बुद्ध्वा भोजसदसि समानीतं तदाकर्ण्य भोजः प्राह। पूर्वं भगवता हनुमता श्रीमद्रामायणं कृतं, तदत्र ह्रदे प्रक्षेपितमिति श्रुतमस्ति। ततः किमिदं लिखितमित्यवश्यं विचार्य्यमिति लिपि ज्ञानं कार्य्यम्। जतु परीक्षयाक्षराणि परिज्ञाय पठतु। तत्र चरणद्वयमानुपूर्व्या लब्धम्।

अयि! खलु विषमः पुराकृतानाम्
भवति हि जन्तुषु कर्म्मणां विपाकः।

ततो भोजः प्राह, एतस्य पूर्वार्द्धं कथ्यतामिति। तदा भवभूतिराह।

क नु कुलमकलङ्कमायतास्याः
क नु रजनीचरसङ्गमापवादः॥

ततो भोजश्चात्र ध्वनिदोषं मत्वा नस्तदेव पूर्वार्द्धमन्यथा पठतिस्म।

क जनकतनया क रामजाया
क च दशकन्धरमन्दिरे निवासः॥

अयि! खलु विषम इत्यादि। ततः भोजः कालि-

दासं प्राह, सुकवे ! त्वमपि कविहृदयं पठेति । स आह,—

शिवशिरसि शिरांसि यानि रेजुः
शिव ! शिव ! तानि लुठन्ति गृध्रपादे ।

अयि ! खलु विषम इत्यादि । ततस्तस्य शिलाखण्डस्य पूर्वपुटे जतुशोधनेन कालिदासः पठति । तमेव दृष्ट्वा राजा भृशं तुतोष । कदाचिद्भोजेन विलासार्थं नूतनगृहान्तरं निर्मितम् । तत्र गृहान्तरे गृहप्रवेशात् पूर्वमेकः कश्चित् ब्रह्मराक्षसः प्रविष्टः । स च रात्रौ तत्र ये वसन्ति तान् भक्षयति। ततोमान्त्रिकान् समाहूय तदुच्चाटनाय राजा यततेस्म । स च आगच्छन्नेव मान्त्रिकानेव भक्षयति । किञ्च स्वयं कवित्वादिकं पूर्वार्धमात्रमेव पठन् तिष्ठति । एवं स्थिते तत्रैव रक्षसि राजा कथमस्य निवृत्तिरिति व्यचिन्तयत् । तदा कालिदासः प्राह, देव ! नूनमयं राक्षसः सकलशास्त्रप्रवीणः सुकविश्च भाति । अतस्तमेव तोषयित्वा कार्य्यं साधयामि, मान्त्रिकास्तिष्ठन्तु । मम मन्त्रं पश्येत्युक्त्वा स्वयं तत्र रात्रौ गत्वा शेतेस्म । ततः प्रथमयामे ब्रह्मराक्षसः समागतः । स च पूर्वं पुरुषं दृष्ट्वा प्रतियाममेकैकां समस्यां पाणि-

निश्चयमेव पठति । येनोत्तरं तत् हृदयगतं नोक्त-
मयं न ब्राह्मणोऽतो हन्तव्य इति निश्चित्य हन्ति ।
तदानीमपि पूर्ववदयमपूर्वः पुरुषः, अतो मया
समस्या पठनीया, न चेद्वक्ति सहृद्यमुत्तरं तस्याः तदा
हन्तव्य इति बुद्ध्या पठति । सर्वस्य द्वे

इति । तदा कालिदासः प्राह,

सुमतिकुमती सम्पदापत्तिहेतू

इति । ततः स गतः । पुनरपि द्वितीययामे
समागत्य पठति । वृद्धो यूना इति । तदा कविराह,

सह परिचयात् त्यज्यते कामिनीभिः ।

इति । तृतीययामे स राक्षसः पुनस्समागत्य पठति ।

एको गोत्रे इति । ततः कविराह,

प्रभवति पुमान् यः कुटुम्बं बिभर्त्ति

ततश्चतुर्थयामे आगत्य स राक्षसः पठति ।

स्त्रीपुंवच्च इति । ततः कविराह,

प्रभवति यदा तद्धि गेहं विनष्टम् ॥

इति । ततः स राक्षसो यामचतुष्टयेऽपि समाधि-
ानमेव ज्ञात्वा तुष्टः प्रभातसमये समागत्य तमा-
ह्य प्राह । सुमते ! तुष्टोऽस्मि किं तवाभीष्टमिति,
कालिदासः प्राह, भगवन्नेतद्गेहं विहायान्यत्र

मन्तव्यमिति । सोऽपि तथेति गतः । अनन्तरं तुष्टो भोजः कविं बहुमानितवान् । एकदा सिंहासनमलङ्कुर्वाणे श्रीभोजे सकलभूपालशिरोमणौ द्वारपाल आगत्य प्राह, देव ! दक्षिणदेशात् कोऽपि मल्लिनाथनामा कविः कौपीनावशेषो द्वारि वर्त्तते । राजा प्रवेशयेत्याह । ततः कविरागत्य स्वस्त्युक्त्वा तदाज्ञया चोपविष्टः पठति ।

नागो भाति मदेन, खं जलधरैः, पूर्णेन्दुना शर्वरी
शीलेन प्रमदा, जवेन तुरगो, नित्योत्सवैर्मन्दिरम् ।
वाणी व्याकरणेन, हंसमिथुनैर्नद्यः, सभा पण्डितैः
सत्पुत्रेण कुलं, त्वया वसुमती, लोकत्रयं भानुना ॥

ततो राजा प्राह, विद्वन् ! तवोद्देश्यं किमिति ।

ततः कविराह ।

अम्बा कुप्यति,न मया,नस्नुषया;सापिनाम्बया,न मया।
अहमपिन तयान जायया,वदराजन्!कस्यदोषोऽयम्॥

इति राजा च दारिद्र्यदोषं ज्ञात्वा कविं पूर्णमनोरथं चक्रे । एकदा द्वारपाल आगत्य राजानं प्राह, देव ! कविशेखरो नाम महाकविर्द्वारि वर्त्तते । राजा प्रवेशयेत्याह । ततः कविरागत्य स्वस्त्युक्त्वा पठति ।

राजन् ! दौवारिकादेव प्राप्तवानस्मि वारणम् ।
मद्वारणमिच्छामि त्वत्तोऽहं जगतीपते ! ॥

तदा प्राङ्मुखस्तिष्ठन् राजाऽतिसन्तुष्टस्तं प्राग्देशं सर्वं कवये दत्तं मत्वा दक्षिणाभिमुखोऽभूत् । ततः कविश्चिन्तयति, किमिदं राजा मुखं परावृत्य मां न पश्यतीति । ततो दक्षिणदेशं समागत्याभिमुखः कविः पठति ।

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कथम् ।
मार्गणौघः समायाति गुणो याति दिगन्तरम् ॥

ततो राजा दक्षिणदेशमपि मनसा कवये दत्त्वा स्वयं प्रत्यङ्मुखोऽभूत् । कविस्तत्रागत्य प्राह ।

सर्वज्ञ इति लोकोऽयं भवन्तं भाषते मृषा ।
पदमेकन्न जानीषे वक्तुं नास्तीति याचके ॥

ततो राजा तमपि देशं कवेर्दत्तं मत्वा उदङ्मुखोऽभूत् । कविस्तत्रापि आगत्य प्राह ।

सर्वदा सर्वदोऽसीति मिथ्या त्वं कथ्यसे बुधैः ।
नारयो लेभिरे पृष्ठं, न वक्षः परयोषितः ।

ततो राजा तां भूमिं कवेर्दत्तां मत्वा उत्तिष्ठतिस्म । कविश्च तदभिप्रायमज्ञात्वा पुनराह ।

राजन् ! कनकधाराभिः त्वयि सर्वत्र वर्षति ।
अभाग्यच्छत्रसंछन्ने मयि नायान्ति बिन्दवः ॥

तदा राजा च अन्तःपुरं गत्वा लीलादेवीं प्राह, देवि ! सर्वं राज्यं कवये दत्तं ततस्तपोवनं मया सहागच्छेति । अस्मिन्नवसरे विद्वान् द्वारि निर्गतः । बुद्धिसागरेण वृद्धामात्येन पृष्टः, विद्वन् ! राज्ञा किं दत्तमिति । स आह, न किमपीति । तदा अमात्यः प्राह, तच्चोक्तं श्लोकं पठ । ततः कविः श्लोकचतुष्टयं पठति । अमात्यस्ततः प्राह, सुकवे ! तव कोटिद्रव्यं दीयते परं राज्ञा यद्दत्तं तव दत्तं भवति, तत्पुनर्वि-क्रीयतामिति । कविस्तथा करोति । ततः कोटिद्रव्यं दत्त्वा कविं प्रेषयित्वा अमात्यो राजनिकटमागत्य तिष्ठतिस्म । तदा राजा च तमाह, बुद्धिसागर ! राज्यमिदं सर्वं दत्तं कवये, पत्नीभिः सह तपोवनं गच्छामि । तव तपोवने तवापेक्षा यदि-मया सहाग-च्छेति । ततोऽमात्यः प्राह, देव ! तेन कविना कोटिद्रव्यमूल्येन राज्यमिदं विक्रीतं, कोटिद्रव्यञ्च विदुषे दत्तम् । अतो राज्यं भवदीयमेव भुङ्क्ष्वेति । तदा राजा च बुद्धिसागरं विशेषेण सम्मानितवान् ।

अन्यदा राजा मृगयारसेनाटवीमटन् ललाटन्तपे तपने घूनदेहः, पिपासापर्य्याकुलस्तुरगमारुह्य उद-कार्थं निकटतटभुवमटन् तदलब्ध्वा परिश्रान्तः कस्य-

चिन्महातरोः अधस्तादुपविष्टः तत्र काचिद्गोपकन्या सुकुमारमनोज्ञसर्वाङ्गा यदृच्छया धारानगरं प्रति तक्रं विक्रेतुकामा तक्रभाण्डमुद्वहन्ती समागच्छति। तामागच्छन्तीं दृष्ट्वा, राजा पिपासावशादेतद्भाण्डस्थं पेयञ्चेत् पिबामीति बुद्ध्याऽपृच्छत् तरुणि ! किमावहसीति । सा च तन्मुखश्रिया भोजं मत्वा, तत्पिपासाञ्च ज्ञात्वा,तन्मुखावलोकनवशाच्छन्दोरूपेणाह ।

हिमकुन्दशशिप्रभशङ्खनिभंपरिपक्वकपित्थसुगन्धरसम्
युवतीकरनिर्मथितं पिब हे नृप!स्वरुजापहरम् ॥ इति

राजा तच्च तक्रं पीत्वा तुष्टः तां प्राह । सुभ्रु ! किं तवाभीष्टमिति । सा च किञ्चिदाविष्कृतयौवना मदपरवशमोहाकुलनयना प्राह । देव ! मां कन्यामेवावेहि । सा पुनराह ।

इन्दुं, कैरविणीव, कोकपटलीवाम्भोजिनीवल्लभं,
मेघञ्चातकमण्डलीव, मधुपश्रेणीव पुष्पव्रजम् ।
माकन्दं पिकसुन्दरीव, रमणीवात्मेश्वरं प्रोषितं,
चेतोवृत्तिरियं सदा नृपवर! त्वां द्रष्टुमुत्कण्ठते॥

राजा चमत्कृतः प्राह, सुकुमारि ! त्वां लीलादेव्या अनुमत्या स्वीकुर्म्मः इति । धारानगरं नीत्वा तां तथैव स्वीकृतवान्। कदाचिद्राजाभिषेके मदगर्व-

पीडिताया: मदिराक्ष्या: करतलगलितो हेमकलशः सोपानपंक्तिषु रटन्नेव पपात । ततो राजा सभायामागत्य कालिदासं प्राह, सुकवे!एनां समस्यां पूरय— टं टं, ट टं टं, ट ट टं, ट टं टं,

तदा कालिदासः प्राह,

आभिषेकेमदविह्वलाया हस्ताच्च्युतोहेमघटो युवत्याः। सोपानमार्गेषु करोऽतिशब्दं, ट टं ट टं टं टटटं टटंटं,॥

तदा राजा स्वाभिप्रायं ज्ञात्वाऽक्षरलक्षं ददौ।

अन्यदा सिंहासनमलङ्कुर्वाणे श्रीभोजे कश्चिच्चोरः चारचकै राजनिकटं नीतः। राजा तं दृष्ट्वा कोऽयमित्यपृच्छत्। तदा चारचकाः प्राहुः, देव ! अनेन कुभिल्लकेन कस्मिंश्चिद्देश्यागृहे घातपातमार्गेण द्रव्याणि अपहृतानीति। तदा राजा प्राह, अयं दण्डनीय इति। ततः मुकुण्डो नाम चोरः प्राह।

भट्टिर्नष्टो, भारवीयोऽपि नष्टो,
भिक्षुर्नष्टो, भीमसेनोऽपि नष्टः।
भुकुण्डोऽहं, भूपतिस्त्वं हि राजन्!
भब्भापङ्क्तावन्तकः सन्निविष्टः॥

तदा राजा प्राह, भो भुकुण्ड! गच्छ गच्छ यथेच्छं विहर। कदाचिद्भोजो मृगयापर्य्याकुलः वने

विचरन् विभ्रमाविष्टहृदयः कञ्चित्तटाकमासाद्य स्थितवान्। श्रमात् प्रसुप्तः। ततोऽपरपयोनिधिकुहरं गते भास्करे।

तत्रैवारोचत निशा तस्य राज्ञः सुखप्रदा।
तच्चन्द्रकरानन्दसन्दोहपरिकन्दला॥

ततः प्रत्यूषसमये नगरीं प्रति प्रस्थितो राजा चरमगिरिनितम्बलम्बमानशशाङ्कबिम्बमवलोक्य सकुतूहलः सभामागत्य तदा समीपस्थान् कवीन्द्रान्निरीक्ष्य समस्यामेकामवदत्।

चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे॥

तदा प्राह भवभूतिः।

अरुणकिरणजालैरन्तरिक्षे गतर्क्षे

ततो दण्डी प्राह॥

चलति शिशिरवाते मन्दमन्दं प्रभाते।

ततः कालिदासः प्राह।

युवतिजनकदम्बे नाथमुक्तौष्ठबिम्बे
चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे॥

ततो राजा सर्वानपि सम्मानितवान्, तत्र कालिदास विशेषतः पूजितवान्। अथ कदाचिद्भोजः नगराद्बहिर्निर्गतः नूतनेन तटाकाम्भसा बाल्यसा-

धितकपालशोधनादिं चकार। तन्मूलेन कश्चन शफ-रशावः कपालं प्रविष्टो विकटकरोटिकानिकटघटितो विनिर्गतः। ततो राजा स्वपुरीमवाप। तद्दारभ्य राज्ञः कपाले वेदना जाता। ततस्तत्रत्यैर्भिषग्वरैः सम्यक्चिकित्सितापि न शान्ता एवमहर्निशन्नितरा-मस्वस्थे राज्ञि अमात्यप्रविदितेन महारोगेण,

च्चामं च्चाममभूद्वपुर्गतसुखं हेमन्तकालेऽभवत्
वक्त्रं निर्गतकान्ति राज्ञवदनाक्रान्ताब्जविम्बोपमम्।
चेतः कार्य्यपदेषु तस्य विमुखं, क्लीवस्य नारीष्विव
व्याधिः पूर्णतरो बभूव, विपिने शुष्के शिखावानिव॥

एवमतीतेसंवत्सरेऽपिकालेनकेनापिनिवारितःसगदः।

ततः श्रीभोजो नानाविधसमानौषधग्रसन रोग-दुःखितमनाः समीपस्थं शोकसागरनिमग्नं बुद्धिसा-गरं कथमपि संयताचरमुवाच वाचम्। बुद्धिसागर! इतः परमस्मद्विषये न कोऽपि भिषग्वरो वसति। मा तनोतु वाङ्कटादिभेषजकोशान् निखिलान् स्रोतसि निरस्यागच्छ। मम देवसमागमसमयः समागत इति। तच्छ्रुत्वा सर्वेऽपि पौरजनाः कव-यश्च अवरोधसमाजाश्च विगलदस्रासारनयना ब-भूवुः। ततः कदाचिद्देवसभायां पुरन्दरः सकलमुनि-

इन्द्रमध्यस्थं वीणामुनिमाह । मुने ! इदानीं भूलोके का नाम वार्त्तेति ? ततः नारदः प्राह, सुरनायक न किमप्याश्चर्य्यं किन्तु धारानगरवासी श्रीभोजभूपालः रोगपीड़ितोनितरामस्वस्थो वर्त्तते। स तस्य रोगः केनापि न निवारितः ।तदनेन भोजनृपालेन भिषग्वरा अपि स्वदेशान्निष्कासिताः वैद्यशास्त्रमपि अनृतमिति निरस्तमिति । एतदाकर्ण्य पुरुहूतः समीपस्थौ नासत्याविदमाह । भोः सर्वैद्यौ ! कथमनृतं धन्वन्तरीयं शास्त्रम् । तदा तावाहतुरमरेश देव ! न व्यलीकमिदं शास्त्रं, किन्त्वमरविदितेन रोगेण बाध्यतेऽसौ भोज इति । इन्द्रः कोऽसावबार्य्यरोगः ? किं भवतोर्विदितः ? ततस्तावूचतुः देव ! भोजेन कापालशोधने कृते तदा प्रविष्टः पाठीनः तन्मूलोऽयं रोग इति । तदा इन्द्रः स्मयमानमुखः प्राह । तदिदानीमेव युवाभ्यां गन्तव्यं नचेदितः परं भूलोके भिषक्शास्त्रस्यासिद्धिर्भवेत् । स खलु सरस्वती विलासस्य निकेतनं शास्त्राणामुद्धर्त्ता चेति । ततः सुरेन्द्रादेशेन तावुभावपि धृतद्विजन्मवेषौ धारानगरं प्राप्य द्वारस्थं प्राहतुः । द्वारस्थ ! आवां भिषजौ काशीदेशादागतौ श्रीभोजाय विज्ञापय । तेनानृतमित्यङ्गी-

ज्ञातं वैद्यशास्त्रमिति श्रुत्वा तत् प्रतिष्ठापनाय तद्रोगनिवारणाय चेति । ततो द्वारस्थः प्राह, भो विप्रौ ! न कोऽपि भिषक्प्रवरः प्रवेष्टव्य इति राज्ञोक्तम् । राजा तु केवलमस्वस्थः, नायमवसरो विज्ञापनस्येति ॥ तस्मिन् क्षणे कार्य्यवशाद्बहिर्निर्गतो बुद्धिसागरस्तौ दृष्ट्वा कौ भवन्ताविल्यपृच्छत् । ततस्तौ यथागत मूचतुः । ततो बुद्धिसागरेण तौ राज्ञः समीपं नीतौ । ततो राजा तावदवलोक्य सुखश्रिया अमानुषामिति बुध्वा आभ्यां शक्यतेऽयं रोगो निवारितुमिति निश्चित्य तौ बहुमानितवान् । ततस्तावूचतुः राजन् ! न भेतव्यं रोगो निर्गतः । किन्तु कुत्रचिदेकान्ते त्वया भवितव्यमिति । ततः राज्ञापि तथा कृतम् । ततस्तावपि राजानं मोहचूर्णेन मोहयित्वा शिरःकपालमादाय तत्करोटिकापुटे स्थितं शफरकुलं गृहीत्वा कस्मिंश्चिद्भाजने निक्षिप्य सन्धानकरण्या कपालं यथावदारचय्य सञ्जीवन्या च तं जीवयित्वा तस्मै तद्दर्शयताम् । तदा तद्दृष्ट्वा राजा विस्मितः किमेतदिति तौ पृष्टवान् । तदा तावूचतुः राजन् ! त्वया बाल्यादारभ्य परिचितकपालशोधनतः संप्राप्तमिदमिति । ततो राजा तावश्विनौ मत्वा,

तच्छोधनार्थमपृच्छत् किमस्माकं पथ्यमिति । ततस्तावूचतुः ।

अशीतेनाम्भसा स्नानं
पयः पानवयः स्त्रियः ।
एतद्वो मानुषाः पथ्यम्

इति तत्रान्तरे राजा मध्ये मानुषा इति सम्बोधनं श्रुत्वा, वयञ्चेन्मानुषाः कौ युवामिति ? तयोः हस्तौ झटिति स्वहस्ताभ्याम् अग्रहीत्। तत स्तत्क्षण एव तावन्तर्धत्तां ब्रुवन्तावेव कालिदासेन पूरणीयं तुरीयचरणमिति । ततो राजा विस्मितः सर्वानाहूय तद्वृत्तमब्रवीत् । तत्श्रुत्वा सर्वेऽपि चमत्कृताः विस्मिताश्च बभूवुः । ततः कालिदासेन तुरीयचरणं पूरितम् । स्निग्धमुष्णञ्च भोजनम् ॥ इति ।

ततो भोजोऽपि कालिदासं लीलामानुषं मत्वा परं सम्मानितवान् । अथ भोजनृपालः प्रतिदिनं सञ्जातबल कान्तिर्वृद्धे शुक्लपक्षे चन्द्र इव । ततः कदाचित् सिंहासनमलङ्कुर्वाणे श्रीभोजे कालिदास-भवभूति-दण्डि-बाण मयूर-वररुचिप्रभृतिकवितिलक-कुलालङ्कृतायां सभायां द्वारपाल इत्याह देव ! कश्चित्कविर्द्वारि तिष्ठति । तेनेयं प्रेषिता गाथा

सनाथा चीठिका देवसभायां निक्षिप्यतामिति तान्द-
र्शयति । राजा गृहीत्वा तां वाचयति ।

काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डम्
दासीहस्तात्सभयमलिखद् व्यालमस्योपरिस्थम् ।
गौरीकान्तं पवनतनयं चम्पकञ्चाङ्गभावं,
पृच्छत्यार्यो निपुणतिलको मल्लिनाथः कवीन्द्रः ॥

तत्श्रुत्वा सर्वापि विद्वत्परिषच्चमत्कृता । ततः कालिदासः प्राह राजन् ! मल्लिनाथः शीघ्रमाकारयितव्य इति । ततो राजादेशाद्द्वारपालेन स प्रवेशितः कविः राजानं स्तुतीत्युक्त्वा तदाज्ञयोपविष्टः । ततो राजा प्राह तं कवीन्द्रं, विद्वन्मल्लिनाथकवे ! साधु रचिता गाथा । तदा कालिदासः प्राह, किमुच्यते साध्विति । देशान्तरगतकान्तायाश्चारित्रवर्णनेन स्लाघनीयोऽसि विशिष्य तत्तद्भावप्रतिभटवर्णनेन तदा भवभूतिः प्राह, विशिष्यते इयं गाथापंक्तिः कण्ठोद्यानवैरिणो वातात्मजस्य वर्णनादिति । ततः प्रीतेन राज्ञा तस्मै दत्तं सुवर्णानां लक्षं, पञ्च गजाश्च दश तुरगाश्च दत्ताः । ततः प्रीतोविद्वान् स्तौति राजानम् ।

देव भोज ! तवदानजलौघैः सोऽयमद्यरजनीति

विशङ्के । अन्यथा तदितेषु शिलागोभूरुहेषु कथमीदृशप्रदानम् ? ततो लोकोत्तरम् श्लोकं श्रुत्वा राजा पुनरपि तस्मै लक्षत्रयं ददौ । ततो लिखतिस्म भाण्डारिको धर्म्मपत्रे ।

प्रीतः श्रीभोजभूपः सदसि विरचितागूढनर्मोक्तिपद्यं,
श्रुत्वा हेम्नाञ्च लक्षं दशवरतुरगान् पञ्चनागानगच्छत्।
पश्चात्तत्रैव सोऽयं वितरणगुणसद्दर्शनात् प्रीतचेता,
लक्षं लक्षञ्चलक्षं पुनरपि च ददौ मल्लिनाथाय तस्मै॥

ततः कश्चिद्भोजराजः कालिदासं प्रति प्राह, सुकवे ! त्वमस्माकं चरमग्रन्थं पठ ।

ततः क्रुद्धो राजानं विनिन्द्य कालिदासः क्षणेन तं देवम् त्यक्त्वा, विलासवत्या सह एकशिलानगरं प्राप ।

ततः कालिदासवियोगेन शोकाकुलस्तं कालिदासं मृगयितुं राजा कापालिकवेषं धृत्वा क्रमेण एकशिलानगरं प्राप ।

ततः कालिदासो योगिनं दृष्ट्वा तं सामपूर्व्वं पप्रच्छ योगिन् ! कुत्र ते स्थितिरिति ? योगी वदति सुकवे! अस्माकं धारानगरे वसतिरिति ।

ततः कविराह, तत्र भोजः कुशली किम् ? ततो योगी प्राह, किं मया वक्तव्यमिति ।

ततः कविराह:, तत्रातिशयवार्त्तास्ति चेत् सत्यं कथयेति । तदा योगी प्राह भोजोदिवं गत इति ।

ततः कवि र्भूमौ निपत्य प्रलपति देव ! त्वां विनास्माकं क्षणमपि भूमौ न स्थितिः, अतस्त्वत्समीपमहमागच्छामीति कालिदासो बहुशो विलप्य चरमश्लोकं कृतवान् ।

अद्य धारा निराधारा, निरालम्बा सरस्वती ।
पण्डिताः खण्डिताः सर्वे, भोजराजे दिवङ्गते ॥

एवं यदा कविना चरमश्लोक उक्तस्तदैव स योगी भूतले विसंज्ञः पपात ।

ततः कालिदासस्तथाविधं तमवलोक्य अयं भोज एवेति निश्चित्य अहह ! महाराज ? तव भवताहं वञ्चितोऽस्मीत्यभिधाय झटिति तं श्लोकं प्रकारान्तरेण पपाठ ।

अद्य धारा सदाधारा, सदालम्बा सरस्वती
पण्डिता मण्डिताः सर्वे, भोजराजे भुवङ्गते ॥

ततो भोजस्तमालिङ्ग्य प्रणम्य,धारानगरं प्रति ययौ ।



सम्पूर्णम् ।